# श्रीशङ्कराचार्यचरितम् ॥



WITH A FOREWORD BY

P. S. Ananthanarayana Sastry.



PUBLISHED BY

The Proprietor of
THE KERALA PUBLISHING HOUSE,
TRICHUR.

1926. *Price 5 as.*

# भूमिका ।

विदितमेवेदं विश्वेषां विपश्चितां, यदिह भारतमण्डलस्य पश्चिमोऽयं भागो भगवतामादिशङ्कराचार्याणामतिपावनेनावतारेणापश्चिमतामनायीति । परमतविदलनेनाद्वैतसिद्धान्तस्य महीयसीं महनीयां च प्रतिष्ठामाहितवतामाचार्यपूज्यपादानां यशःपताका तावन्महीतले विजेष्यते यावद्दिवि विराजिष्यते ज्योतिषां कदम्बकम् । भवार्णवकर्णधाराणां दिग्विभागविज्ञानाय पश्चिमाम्बुनिधिवेलायामुद्योतितोऽयमद्वैतदीपमहास्तम्भः सकलेऽपि भूमण्डले सम्प्रति कियतीं नाम प्रवर्षति प्रकाशपरम्परामिति नेदं तिरोहितं लब्धवर्णस्य कस्यापि ॥

परमगुराः पावनं चरित्रं संक्षिप्तमधुरया सरण्या वर्णयदिदं ग्रन्थरत्नं सहृदयानामुपहरतो मे चिरस्य चरितार्था लेखनी । क्वचिन्माधवाचार्यविरचितं शङ्करदिग्विजयमपरत्राविदितकर्तृनामधेयं शङ्करविजयविलासं चानुसरन्नेतद्ग्रन्थप्रणेता कोऽपि केरलीय एव भवितुमर्हतीति बलवती मे संभावना । यतः केरळीयानां देशविशेषाणां देवायतनानां चानन्यसाधारणं परिचयमेष वर्णनाभिराविष्करोति । बहुषु सन्दर्भेषु पुराणरीतिम-

नुकुर्वन्नेतत्प्रणेता नैसर्गिकमात्मनः काव्यनिर्माणपाटवं न निगूहितुं पारयतीति मे प्रतिभाति । वाल्मीकीयरीत्या कथासंक्षेपं प्रथमाध्याये निबध्नन् विष्णुयमदूतादिसंलापेष्वपि पुराणसरणिमनुकुर्वन्नयं स्थलान्तरेषु कीदृशीमर्थचारुतां प्रकाशयतीत्यत्र हनुमत्कृतशिवस्तुतिप्रभृतयो वहन्ति साक्षिभूयम् । अदसीयस्य वर्णनाचमत्कारस्य किमप्युदाहरणमदत्वा न मे शाम्यति कुतूहलम् । दृश्यताम्—

"संन्यासमूलः सच्छायः शिष्यशाखामहत्तमः ।
ज्ञानपुष्पोऽमृतफलो रेजे शङ्करपादपः ॥"

भगवत्पादानां परधामप्रवेशं तु प्रस्तुतग्रन्थकर्ता श्रीवृषाचले संवृत्तमाचष्टे इत्येतदन्यग्रन्थादृष्टं कथावस्तु । पुरावृत्तमार्गे दत्तदृष्टीनां चरित्रान्वेषकाणामेतद्विषयक आदरो यादृशः कीदृशो वा भवतु, सरलमधुरकथाकथनरसलालसाः सहृदयाः सशिरःकम्पमादरिष्यन्ते प्रस्तुतं ग्रन्थतल्लजमित्यत्र नास्ति संशयलेशस्याप्यवकाशः ॥

स्वगृहग्रन्थशालाया अदसीयमादर्शं जनतोपकृतये प्रकाशकसात्कृतवते कूटल्लूर् ब्राह्मणगृहावतीर्णाय श्रीमते नारायणनम्पूतिरिप्पाट् महाशयाय महदाधमर्ण्यं धारयति सहृदयसमुदायः । आदर्शग्रन्थेऽनुपलब्धा लुप्ततया भासमानाः केचिदंशा मया स्वयमुल्लिखिताः को-

ष्ठान्तः प्रक्षिप्य प्रकाश्यन्ते । अनवगतार्थो भागः कोष्ठान्तः प्रश्नचिह्नेन चाङ्कितः । अदर्शीयस्यादर्शान्तरस्य दर्शनं यावत् कालविलम्बोऽपि प्रकाशकानां दुस्सहः समपद्यतेत्यत्र तु प्रकाशनसमुत्सुकता परमपराधिनी । सति पुनर्द्वितीयमुद्रणभागधेये आदर्शान्तरसंवादादिना सर्वं समीकृत्य संस्कारिष्यत इत्येतावता सम्प्रति संतोष्टव्यं सहृदयैरिति प्रार्थयते—

Palghat<br>5–11–26.

रसिकजनचरणसेवी<br>अनन्तनारायणशास्त्री ।

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ७ | दीप्यति | दिव्यति |
| २२ | १८ | नावपद्यत | नान्वपद्यत |
| २९ | ५ -- ७ | साक्षीत्वे | साक्षित्वे |
| ३० | १ | न्यवसन् | न्यवसत् |
| ३३ | ४ | नीर्मर्ली | निर्मली |
| ३८ | १ | विष्णुदूता | विष्णोर्दूता |
| ३९ | ११ | विपरीताश्च | विपरीतश्च |
| ४७ | ३ | दर्शनन | दर्शने न |

॥ श्री ॥

# शङ्कराचार्यचरितम् ॥

## प्रथमाध्यायः ॥

गणेशाय नमस्तस्मै यत्प्रसादद्विवस्वता ।
प्रत्यूहध्वान्तविध्वंसः क्रियते सर्वकर्मणाम् ॥ १ ॥
मदीयरसनारंगनटनेषु समुत्सुका ।
एषा सरस्वती भूयात् सतामानन्ददायिनी ॥ २ ॥
समाश्रितपदांभोजजनतासुरपादपः ।
सर्वं मम शुभाभीष्टं पूरयेत् पार्थसारथिः ॥ ३ ॥
क्षिप्त्वा ज्ञानतमोराशिं पदार्थानथ दर्शयन् ।
गुरुरत्नप्रदीपो मे मनोधामनि भासताम् ॥ ४ ॥
सर्वेश्वरकथानां ये कर्तारः कविपुङ्गवाः ।
जयन्ति सुतरां लोके वाल्मीकिव्यासशङ्कराः ॥ ५ ॥
सर्वागमास्पदं वन्दे व्यासाचलमिमं कविम् ।
बभूव शङ्कराचार्यकीर्तिकल्लोलिनी यतः ॥ ६ ॥
अत्युन्नतस्य काव्यद्रोर्व्यासाचलभुवोऽखिलम् ।
अर्थप्रसूनमादातुमसमर्थोऽहमद्भुतः (?) ॥ ७ ॥
ह्रस्वमत्यंकुशग्राह्यं गृहीत्वा कलयामि तत् ।

निबन्धनस्रजं काश्चिद्यतीश्वरमनोमुदे ॥ ८ ॥
निबन्धनमिदं पुण्यमध्यायनवकान्वितम् ।
करोमि यतिवर्यस्य निदेशं समुपाश्रितः ॥ ९ ॥
कथासंक्षेप एवाद्ये द्वितीयेऽध्याय उद्भवः ।
तृतीये व्याससल्लापस्तुर्ये प्राक्शिष्यसंभवः ॥ १० ॥
सुरेश्वरस्य शिष्यस्य संन्यासः पञ्चमे ततः ।
षष्ठे तु हस्तामलकतोटकाभिख्यशिष्ययोः ॥ ११ ॥
सप्तमे मुक्तिदायिन्याः काल्या माहात्म्यकीर्तनम् ।
रामेश्वरकथाख्यानं सर्वपापहरं ततः ॥ १२ ॥
सर्वज्ञाननिधेस्तस्य शङ्कराचार्ययोगिनः ।
नवमे परमानन्दसायुज्यमनुवर्णितम् ॥ १३ ॥
शब्दे चार्थे कथायां च मौढ्यभाजा मयान्यथा ।
यत् प्रोक्तमिह तत् सर्वं क्षन्तुमर्हति शङ्करः ॥ १४ ॥
यतीन्द्रं निर्मलात्मानं नानाविधकथाविदम् ।
शिष्यभूतो यतिः कश्चित् पप्रच्छ जनितादरम् ॥ १५
शिष्यः– सर्वेषां गुरुरस्माकं सर्वज्ञो यतिपुंगवः ।
जातः श्रीशङ्कराचार्यः कस्मिन् देशे सुपावने? ॥ १६ ॥
आरभ्य जन्मतः कस्मिन् वत्सरे भिक्षुतामगात्? ।
केषां निबन्धनानां च कर्ताभूत् स यतीश्वरः? ॥ १७ ॥
कति शिष्या महात्मानः तस्याभूवन्महामते? ।
सशिष्यः सञ्चरन् भूमौ कानि चक्रेऽद्भुतानि सः? ॥ १८

सायुज्यं कुत्र देवो नः प्राप्तवानपि तत्त्ववित्? ।
एतत् सर्वमपि श्रोतुं गुरो कौतुकवानहम् ॥ १९ ॥

गुरुः– हन्त ते कथयिष्यामि पापहारिणमद्भुतम् ।
अस्मद्देशिकवृत्तान्तं शिष्य, तं शृणु सादरम् ॥ २० ॥

पुरा केरळमेदिन्यां कालटिक्षेत्रवासिनः ।
समीपे पद्मनाभस्य महानासीत् द्विजोत्तमः ॥ २१ ॥
तस्य पुत्रो महान् जज्ञे वृषाचलनिवासिनः ।
ईश्वरस्य प्रसादेन सर्वज्ञः शङ्कराह्वयः ॥ २२ ॥
बाल्य एव मृते ताते जनन्या परिपोषितः ।
उपनीतः स निश्शेषविद्यापारगतोऽभवत् ॥ २३ ॥
षोडशाब्दे समायाते विज्ञायान्तं निजायुषः ।
सोऽनुज्ञातो जनन्याभूत् तुरीयाश्रममाश्रितः ॥ २४ ॥
तीर्थस्नानानि कुर्वाणः प्राप्तो बदरिकाश्रमम् ।
उषित्वा सुचिरं तत्र नरनारायणाश्रमे ॥ २५ ॥
चक्रे वेदान्तसूत्राणां भाष्यं मोक्षैकसाधनम् ।
सन्तुष्टं तत्र संप्राप्त वेदव्यासं ददर्श सः ॥ २६ ॥
संभाषणमथान्योन्यं चक्रतुस्तावुभौ मुदा ।
भाष्यं निरीक्ष्य सन्तुष्टे पाराशर्ये महामुनौ ॥ २७ ॥
गते, मात्रा स्मृतस्तस्मात् स्वजन्मागारमाप सः ।
मातरं तत्र नत्वा स्वामासन्नमरणां सतीम् ॥ २८ ॥
तस्यै स परमं वेद्यमुपादिशदुदारधीः ।

मृतायास्तु ततो मातुर्देहं छित्वा समुज्ज्वले ॥ २९॥
कुण्डस्थे पावके हुत्वा भक्त्यासौ कुण्डमानमत् ।
भूयोऽपि शङ्कराचार्यो गत्वा बदरिकाश्रमम् ॥३०॥
संन्यासं कारयामास द्विजातेर्विष्णुशर्मणः ।
दधौ सनन्दनाभिख्यां सोऽन्त्याश्रममुपाश्रितः॥३१॥
पद्मपादाभिधानं च वितीर्णं दैवतैः पुनः ।
अचार्यस्तेन शिष्येण प्रयागं तीर्थमागतः ॥ ३२ ॥
तत्र गत्वा महापुण्ये गंगायामुनसंगमे ।
स्नानं कृत्वा तु विधिवत् सुखासीनो गतश्रमः ॥ ३३
अथासीनं ददर्शासौ कुमारांशसमुद्भवम् ।
कर्मकाण्डेऽतिनिपुणं भट्टाचार्यं महामतिः ॥ ३४ ॥
भट्टाचार्यः समाकर्ण्य भाष्यं देशिकनिर्मितम् ।
सन्तोषं नितरां प्राप्य निजगाद महामतिः ॥ ३५॥
"जित्वा वादेन मच्छिष्यं विश्वरूपं यतिं कुरु ।
भाष्यस्य महतोऽस्यार्थो तेन कारय वार्तिकम् । ३६
तथैव सकलं कृत्वा भट्टाचार्यवचस्ततः ।
सुरेश्वराह्वयेनापि तेन शिष्येण सोऽलसत् ॥ ३७ ॥
शिष्याभ्यां सह गोकर्णं ततो देशिकपुङ्गवः ।
गच्छन् पथि ददर्शैकं निराशं द्विजनन्दनम् ॥ ३८ ॥
संतुष्टहृदयोऽत्यर्थमाचार्यस्तं च वर्णिनम् ।
स्वतो लब्धामलज्ञानं निनायाश्रममन्तिमम् ॥ ३९ ॥

तृतीयो गुरुशिष्योऽयं हस्तामलकसंज्ञया ।
विश्रुतस्तोटकाख्योऽभूदेकः शिष्योऽस्य तत्परः ४०
शिष्यैश्चतुर्भिराचार्यो रराज चतुरात्मभिः ।
मोदादुपनिषद्वाक्यैस्तत्सेवार्थमिवागतैः ॥ ४१ ॥
तीर्थानि सेवमानोऽथ शिष्यैः सार्धं महात्मभिः ।
भूमेः प्रदक्षिणं कृत्वा रामसेतुमवाप सः ॥ ४२ ॥
स्नात्वा तीर्थे यथावत् तैः शिष्यैः सह यतीश्वरः ।
गंगातोयाभिषिक्तं च रामनाथं ननाम सः ॥ ४३ ॥
ततः काञ्चीपुरं गत्वा सर्वज्ञो यतिपुंगवः ।
सर्वज्ञपीठमारोढुमैच्छत्तत्र विराजितम् ॥ ४४ ॥
तदा पप्रच्छ तं वाणी विजिताखिलसूरिणम् ।
भवता किं यतिश्रेष्ठ ज्ञाता कामकलाखिला ? ॥ ४५
अस्योत्तरमहं वाणि! भाविन्यष्टमवासरे ।
वक्ष्यामीति ततो गत्वा जिज्ञासुर्मान्मथीः कलाः ॥ ४६
स्वदेहरक्षणे शिष्यानादिश्य चतुरो गुरुः ।
गतासुं कस्यचित् देहं प्रविवेश महीपतेः ॥ ४७ ॥
उषित्वा राजयोषिद्भिः सार्धं राजगृहेषु सः ।
कामशास्त्रस्य तत्त्वज्ञः स्वदेहं प्राप्तवान् पुनः ॥ ४८ ॥
भूयो गत्वा सरस्वत्या दत्वा चोद्योत्तराण्यथ ।
सर्वज्ञपीठमारुह्य निविष्टः सोऽष्टमेऽहनि ॥ ४९ ॥
सुविस्मितैः सभासद्भिरत्यर्थं मानितस्ततः ।

शिष्यैः सह वृषाद्रीशं प्राप्तवानथ देशिकः ॥ ५० ॥
स्वायुषोऽन्तं स विज्ञाय स्नात्वा तत्रत्यदेवता ।
नत्वा कुर्वन् हरिस्तोत्रं देवसायुज्यमाप्तवान् ॥ ५१ ॥
ईदृशं शङ्कराचार्यचरितामृतमद्भुतम् ।
श्रोतव्यं कीर्तितव्यं च यतीनां तु विशेषतः ॥ ५२ ॥

॥ इति श्रीशङ्कराचार्यचरिते प्रथमोऽध्यायः ॥

---

## द्वितीयाध्यायः ॥

---

शिष्यः– आचार्यचरितं किञ्चिद्विस्तरेण समन्वितम् ।
श्रोतुमिच्छामि पापघ्नं वक्तुं पीडा न चेद्गुरोः ॥ १ ॥
गुरुः– नैव पीडा न तन्द्री च नैव निद्रा कदाचन ।
अस्मद्देशिकवृत्तान्तं ब्रुवतो मम कौतुकात् ॥ २ ॥
शिष्य, वक्ष्याम्यहं किञ्चिद्विस्तरेण गुरोः कथाम् ।
अतिविस्तरतो वक्तुं नालं भुजगराडपि ॥ ३ ॥
सर्वपापहरं रम्यं सर्वव्याधिविनाशनम् ।
चरितं देशिकेन्द्रस्य शृणु वत्स, समाहितः ॥ ४ ॥
पुण्यतीर्थसमाकीर्णा पुण्यदेवालयान्विता ।
मेदिनी केरळाख्यास्ति भूसुरोत्तमभासुरा ॥ ५ ॥
नानापदानविख्याता राजवीरविराजिता ।
नानावननदीशैलनगरागारशोभिता ॥ ६ ॥

क्षेत्रं दक्षिणकैलासनामधेयं सुविश्रुतम् ।
यत्र राजत्युमाशङ्करास्पदं भुक्तिमुक्तिदम् ॥ ७ ॥
धाम विष्णोरतिख्यातं स्यानन्दूरसमाह्वयम् ।
श्रीशंबराभिधानं च यत्र राजति पावनम् ॥ ८ ॥
निळा मुरुदूद्धा चेति तत्र नद्यौ विराजतः ।
निळायां शंबरक्रोडं भासते शास्तुरास्पदम् ॥ ९ ॥
नावाक्षेत्रं च तस्या हि तीरे दीप्यति मुक्तिदम् ।
भवनं पद्मनाभस्य भुवनत्रयपावनम् ॥ १० ॥
चूर्णीति चापरा ख्याता तीरयोरुभयोर्नदी ।
अतिस्वच्छजला धत्ते पुण्यान् बहुसुरालयान् ॥ ११
ऋद्धिमानुत्तरे तीरे तस्याः पावनपाथसः ।
कश्चिद्देशो महानस्ति कालटीति सुविश्रुतः ॥ १२ ॥
सर्ववेदार्थनिपुणैः सर्वशास्त्रविशारदैः ।
सर्वाश्रमरतैः शान्तैरन्वितो विप्रसत्तमैः ॥ १३ ॥
दूरीकृतसमस्तापत्स्वानुभावेन भूयसा ।
यत्र नारायणो भाति कर्ता सकलसंपदाम् ॥ १४ ॥
तत्र विप्रोत्तमो जज्ञे सर्ववेदार्थतत्त्ववित् ।
सर्वशास्त्रार्थतत्त्वज्ञो गृही दानरतो महान् ॥ १५ ॥
निजधर्मरतो नित्यं पत्न्या सह गृहे वसन् ।
स निनायानपत्यो हि भूसुरो बहुवत्सरान् ॥ १६ ॥
लोका न सन्त्यपुत्रस्येत्यातिमात्रमनारतम् ।

सन्तापसहितं विप्रं भार्योवाच विचार्य तम् ॥ १७ ॥
सर्वभक्तजनाकांक्षापूरणामरपादपः ।
निषेव्यः क्षिप्रमावाभ्यामपत्यार्थमुमापतिः ॥ १८ ॥
उपमन्युरिति ख्यातो विप्रसूनुः पुराभवत् ।
क्रमतस्तस्य वृत्तान्तं शृणु सादरमद्भुतम् ॥ १९ ॥
दारिद्र्येण कृशांग्या स स्वमात्रा सह जातुचित् ।
मातुलस्य गृहं प्राप्तो धनिनः करुणानिधेः ॥ २० ॥
सदुग्धं सघृतं भक्तमश्नन सः शिशुरात्तमुत् ।
संक्रीडमानस्तत्रत्यैरवसत् द्विजबालकैः ॥ २१ ॥
ततः स्वगेहमायातं पुत्रं दुग्धान्नकांक्षिणम् ।
रुदन्तं बालकं प्रोचे माता दौर्गत्यपीडिता ॥ २२ ॥
पूजितं न मया पूर्वं चन्द्रमौलिपदांबुजम् ।
कथं नु लभ्यते संपदनीशचरणार्चनैः ॥ २३ ॥
श्रुत्वेति वचनं मातुरुपमन्युरुदारधीः ।
तपसे कृतसङ्कल्पो ययौ तदनुमोदितः ॥ २४ ॥
पावनं वनमासाद्य सरस्तीरे महामनाः ।
स पञ्चहायनो बालस्तपश्चक्रे सुदुष्करम् ॥ २५ ॥
अतिघोरं तपस्तस्य चरतस्तेजसा भृशम् ।
अतिभानुहुताशेन ज्वलितं भुवनत्रयम् ॥ २६ ॥
भीतः शतक्रतुस्तावत् ब्रह्मणा माधवेन च ।
समेतः शङ्करं प्राप्य स्तुत्वोवाच निजं भयम् ॥ २७

ततो महेश्वरो देवस्तं गत्वा द्विजबालकम् ।
महेन्द्रवपुषा छन्नः प्रोवाच विविधां गिरम् ॥ २८ ॥
ईशो विचित्रया वाचा तं निवर्तयितुं शिशुम् ।
तपसः सुस्थिरात्मानमनीशो हि बभूव सः ॥ २९ ॥
हित्वा कपटवेषं स सुप्रसन्नमनाः शिवः ।
आश्रितो निजरूपं च शिशोः प्रत्यक्षतामगात् ॥ ३० ॥
अहिनद्धे जटाजूटे सुधांशुकलयोल्लसन् ।
कालकूटस्य कालिम्ना शोभमानगलान्तरः ॥ ३१ ॥
त्रिशूलमृगटङ्काद्यैर्विराजितकरांबुजः ।
व्याघ्रचर्मांबरोऽहीन्द्रकाञ्चीवलयभूषितः ॥ ३२ ॥
फणिनूपुरपादाब्जः सुप्रसादमुखांबुजः ।
करुणांबुधिकल्लोलचालितेक्षणपङ्कजः ॥ ३३ ॥
अन्वितः प्रमथव्रातैः सहितो गिरिकन्यया ।
पुत्रयोरिव तत्रालं बाले प्रेम दधानया ॥ ३४ ॥
ईदृशं गिरिजाकान्तमुपमन्युर्विलोक्य तम् ।
प्रणाममकरोद्भक्त्या सन्तोषपुलकाञ्चितः ॥ ३५ ॥
दोर्भ्यामुत्थाप्य चालिंग्य स्वपुत्रमिव तं शिशुम् ।
किं त्वमिच्छसि बालेति शङ्करः परिपृष्टवान् ॥ ३६ ॥
अन्यन्नैवाहमिच्छामि त्वत्पदांबुजसेवनात् ।
ब्रुवाणमिति तं भूयः स्वाङ्कमारोपयत् प्रभुः ॥ ३७ ॥
तस्य जिघ्रन् मुखांभोजं कारुण्यविवशो भृशम् ।

तस्मै ददौ महादेवो बालायाखिलसंपदम् ॥ ३८ ॥
गिरिजागिरिशौ नत्वा लब्ध्वाप्यनुमतिं तयोः ।
स्वगेहं प्राप्तवान् बालो मातरं सादरोऽनमत् ॥ ३९ ॥
उपमन्युरितीशस्य प्रसादेन समृद्धिमान् ।
मात्रा सह मुदावात्सीत् स्वगेहे बहुसंपदि ॥ ४० ॥
एवं प्रसादिनं देवं भक्ताभीष्टवरप्रदम् ।
शंभुं सेवावहै भक्त्या क्रमतस्तनयार्थिनौ ॥ ४१ ॥
इत्थं प्रियावचः श्रुत्वा सन्तुष्टो द्विजपुंगवः ।
तया सह वृषाद्रीशं बहुकालमसेवत ॥ ४२ ॥
सेव्यमानो महादेवस्ताभ्यां बिभ्रद् द्विजाकृतिम् ।
आत्मानं दर्शयामास तस्मै स्वप्ने कदाचन ॥ ४३ ॥
किं त्वं वाञ्छसि विप्रेति सुपृष्टेन द्विजन्मना ।
कांक्षामि पुत्रमित्युक्तः शंभुः प्रोवाच तं तदा ॥ ४४
पुत्रं सर्वगुणोपेतमेकं सर्वज्ञमेव वा ।
अपीच्छसि बहून् पुत्रान् विपरीतान् महीसुर? ॥ ४५
एवमुक्तो महीदेवस्तं द्विजं पुनरब्रवीत् ।
अहं वाञ्छामि सर्वज्ञं पुत्रमेकं गुणाकरम् ॥ ४६ ॥
इत्थमुक्तो बभाषे तं द्विजवेषो महेश्वरः ।
तथैवास्तु सुतो धीमान् सर्वज्ञस्तव भूसुर ॥ ४७ ॥
त्वं गच्छ गृहमित्युक्तस्तरसा प्रतिबुध्य सः ।
स्वप्रियां विप्रवर्यस्तं स्वप्नवृत्तान्तमब्रवीत् ॥ ४८ ॥

ततस्तौ दम्पती मत्वा सफलं स्वप्नदर्शनम् ।
समाप्तभजनं शंभुं प्रणम्य भवनं गतौ ॥ ४९ ॥
संतर्प्य विप्रसंघातं वस्त्रान्नकनकादिभिः ।
आशीर्वचांसि तेषां तौ जगृहाते वधूवरौ ॥ ५० ॥
लब्धानुज्ञौ द्विजातीनां तेषां भुक्तवतां ततः ।
तद्भुक्तशेषमन्नं तौ भोक्तुकामौ बभूवतुः ॥ ५१ ॥
तत्रान्ने भोक्ष्यमाणे तु प्राविशज्ज्योतिरैश्वरम् ।
दम्पती तौ मुदोपेतौ बुभुजाते तदादृतौ ॥ ५२ ॥
गर्भं दधार सा तूर्णं शङ्करांशेन राजितम् ।
प्रवृद्धे तत्र चासूत नन्दनं समये शुभे ॥ ५३ ॥
प्रादुर्भावे कुमारस्य लग्नमासीत् सुशोभनम् ।
बलयुक्तं शुभज्योतिस्समारूढसमीक्षितम् ॥ ५४ ॥
येन सर्वज्ञतामेति जातवान् भुवि मानुषः ।
स च योगोऽप्यभूत्तस्य द्विजपुत्रस्य संभवे ॥ ५५ ॥
मृगेन्द्रगजसर्पाखुतरक्षुहरिणादयः ।
हित्वान्योन्यं तदा वैरं जन्तवो व्यहरन् वने ॥ ५६ ॥
पुष्पाणि पुष्पिता वृक्षा मुमुचुश्च तथा लताः ।
सुप्रसन्नजला नद्यो निष्कम्पाः सिन्धवोऽभवन् ॥
द्वैतवादिकराग्रेभ्यः पुस्तकानि तदापतन् ।
अद्वैतवादिनां चेतो हृष्टं व्यासस्य चाभवत् ॥ ५८ ॥
स द्विजस्तनयं दृष्ट्वा मग्नोऽप्यानन्दसागरे ।

स्नात्वा नदीजले प्रादाद्द्विजेभ्यो धनसञ्चयम् ॥ ५९ ॥
यथावत्स महीदेवो जातकर्म विधाय च ।
भूयो दृष्ट्वात्मजं हृष्टो यथेन्दुं कुमुदाकरः ॥ ६० ॥
तारकान्तेन रुद्रांशेनारिसंरोधिशक्तिना ।
पार्वतीव कुमारेण तुष्टा सा च द्विजाङ्गना ॥ ६१ ॥
जन्मकालममुष्याथ ज्योतिश्शास्त्रविशारदाः ।
विचार्य सुतरां बुध्या शशंसुर्द्विजपुङ्गवाः ॥ ६२ ॥
सर्वज्ञो भविता नूनं तव पुत्रो महीसुर! ।
हितमद्वैतवादिभ्यः शास्त्ररत्नं विधास्यति ॥ ६३ ॥
चित्रैर्बहुविधैर्वादैर्विजेता च सरस्वतीम् ।
स्थापयिष्यति लोकेऽस्मिन् कीर्तिं च विमलां निजाम् ॥
एवंविधान समाकर्ण्य पुत्रजन्मगुणान् द्विजः ।
विस्मितोऽतीव पूर्वस्मात् गिरीशे भक्तिमानभूत् ॥

॥ इति श्रीशङ्कराचार्यचरिते द्वितीयोऽध्यायः ॥

---

# तृतीयाध्यायः ॥

---

द्वादशेऽहनि तं बालमङ्कमारोप्य कौतुकात् ।
चक्रे शङ्करनामानं पिता शङ्करभक्तिमान् ॥ १ ॥
दैवज्ञवाणीं संचिन्त्य तत्प्रज्ञामवलोक्य च ।
आरब्धाक्षरमारंभे तृतीयाब्दस्य तं व्यधात् ॥ २ ॥

एकवारं लिखित्वा स जग्राह लिपिसञ्चयम् ।
नानाविधं समस्तं च शङ्करोऽतीव बुद्धिमान् ॥ ३ ॥
काव्यानि चेतिहासानि पुराणान्यखिलानि सः ।
यथावज्जगृहे धीमान प्रयाते वत्सरत्रये ॥ ४ ॥
पञ्चमाब्दे निजं पुत्रमुपनेतुमना द्विजः ।
पञ्चत्वमगमत् सद्य: कालो हि दुरतिक्रमः ॥ ५ ॥
वल्लभे पञ्चतां याते शोकविह्वलमानसा ।
भार्या बालसुता वृद्धा रुरोद करुणं सती ॥ ६ ॥
क्रमेणाश्वासिता मित्रैः शोकमुत्सृज्य सा ततः ।
सुतेन कारयामास संस्कारादिक्रियाः पितुः ॥ ७ ॥
संवत्सरान्ते दीक्षां च समाप्य विधिवत् पितुः ।
पञ्चमाब्दे शुभे काले द्विजत्वं प्राप शङ्करः ॥ ८ ॥
ततः स जगृहे सांगान निगमानखिलानपि ।
पदानि तेषामर्थांश्च कालेनाल्पेन बुद्धिमान् ॥ ९ ॥
किं फलं बहुनोक्तेन षोडशाब्दे समागते ।
सर्वज्ञत्वमगादेव शङ्करः शङ्करांशजः ॥ १० ॥
दूरयानाक्षमां दृष्ट्वा जरया जननीमसौ ।
किञ्चिद्दूरगतां चूर्णां निन्ये निजगृहान्तिकम् ॥ ११ ॥
अंबा हितार्थमानीता पुत्रेणात्मगृहान्तिकम् ।
अंबापगेति चाख्याता तस्यां ककुभि सा नदी ।
स्नानार्थमेकदा तस्मिन्नवतीर्णे नदीजले ।

अग्रहीत्तीक्ष्णदंष्ट्रस्तं ग्राहः पादे महाबलः ।। १३ ।।
निजाक्रोशं समाकर्ण्य मातरं द्रुतमागताम् ।
सोऽब्रवीदंब, मां नक्रो बलवानग्रहीत् पदे ।। १४ ।।
संन्यासी भवितुं बुद्ध्या यदि निश्चिनुयामहम् ।
मोक्ता मामयमह्नाय नात्र कार्या विचारणा ।। १५ ।
उक्तेति निजपुत्रेण तस्य जीवितकांक्षया ।
सानुमेने च तत् कर्तुं संन्यस्तं चात्मना तदा ।।१६ ।
ग्राहमुक्तो जलोत्तीर्णः सोऽब्रवीज्जननीं ततः ।
मया जननि, संन्यस्तं मनसा विधिवैभवात् ।। १७ ।।
मनसा कृतसंन्यासो यदि कुर्यां विलंबनम् ।
जीवन् श्राद्धादिकरणे पतितः स्यामहं ध्रुवम् ।।१८।।
ततोऽद्यैव गमिष्यामि त्वां निधाय सुहृज्जने ।
संस्मृतोऽहं त्वया मातरागमिष्यामि सत्वरम् ।।१९।
मृतां च संस्करिष्यामि त्यक्तशोका, यमालये ।
इत्युक्त्वा स विनिक्षिप्य बन्धुलोके स्वमातरम् ।।
प्रणम्य तदनुज्ञातो यियासुरभवद्द्रुतम् ।
सोऽपश्यत् पुरतस्तावत् कंचिदिन्दीवरान्विपम् ।।
महानुभावमूचे तं शङ्करं समहोदाधि (?)।
अप्रमेयानुभावं त्वं वासुदेवं शिलामयम् ।। २२ ।।
वसन्तमिह साधूनां रक्षणार्थमवेहि माम् ।
त्वया मातृहितं कर्तुमानीतातिसमीपगा ।। २३ ।।

मद्ग्रामोर्मिकरैरेषा (तापयत्यनिशं नदी) ।
प्रतिवर्षं महावेगैरन्तर्गृहमुपागतैः ॥ २४ ॥
सलिलैश्चाल्यमानोऽस्या आसन्नपतनोऽस्म्यहम् ।
प्रयाते भवति क्षिप्रं यास्याम्यहमपि ध्रुवम् ॥ २५ ॥
तस्माद्विधाय मद्रक्षां याहि कांक्षितसिद्धये ।
इत्युक्तः स शिलारूपं दोर्भ्यामुद्धृत्य तं शनैः ॥ २६॥
किञ्चिद्दूरं नदीतीरे नीत्वा चक्रे प्रतिष्ठितम् ।
तस्मादपि जनन्याश्च लब्ध्वानुज्ञां ततोऽप्युभौ ॥ २७
शङ्करोऽतीव निस्सङ्गः संन्यासाय जगाम सः ।
श्रीशुकस्याभवच्छिष्यो गौडपाद इति श्रुतः ॥ २८ ॥
तस्य शिष्यो महातेजा वर्तते यो द्विजोत्तमः ।
संन्यासविधितत्वज्ञं गोविन्दस्वामिनं स्थितम् ॥२९॥
काश्यामवाप वेगेन वायुमार्गमुपाश्रितः ।
ततश्च कृतसंन्यासो (यथावज्जगृहेऽञ्जसा) ॥ ३० ॥
सर्वं यतिजनैर्ग्राह्यमुपदेशं महत्तरम् ।
तुरीयमाश्रमं गत्वा निर्मलात्मा जितेन्द्रियः ॥ ३१ ॥
गुरुशुश्रूषयानैषीत् भूयिष्ठानि दिनानि सः ।
स जातु शङ्कराचार्यस्तीर्थयात्रासमुत्सुकः ॥ ३२ ॥
तदनुज्ञामयाचिष्ट निजं देशिकमादरात् ।
नानादेशान् दिदृक्षेऽहं बहुतीर्थसमन्वितान् ॥ ३३ ॥
देयानुज्ञा गुरो, मह्यं तदर्थं शिष्यवत्सल ।
तमुवाच गुरुः शिष्यं तीर्थयात्रासमुत्सुकम् ॥ ३४ ॥

यतीनां ज्ञाननिष्ठानां तीर्थस्नानं सुदुष्करम् ।
निर्मानुषा निरावासा निर्जला बहुकण्टकाः ॥ ३५ ॥
प्रदेशा बहवः सन्ति (मार्गेषु मतिमत्तम) ।
यात्राविघ्नकराश्चान्ये चोरव्याघ्रादयस्तथा ॥ ३६ ॥
क्षेत्रवासो गुरौ वासस्तीर्थे तच्चरणोदकम् ।
स्थितिरत्रैव कार्या ते वेदान्तार्थं विचिन्तयन् (?) ॥
इति श्रुत्वा गुरोर्वाक्यं यतिश्रेष्ठस्तमब्रवीत् ।
सत्यं हि भगवद्वाक्यं तथापि मम मानसम् ॥ ३८ ॥
तीर्थस्नाने समुद्युक्तं साम्प्रतं वर्तते गुरो ।
स दूरस्थोऽप्यदूरस्थो यो धत्ते गुरुमात्मना ॥ ३९ ॥
सोऽन्तिकस्थोऽपि दूरस्थश्चिन्त्यते येन नो गुरुः ।
तीर्थसेवासु सत्सङ्गः सत्सङ्गान्निर्मला मतिः ॥ ४० ॥
निर्मलायां मतौ ज्ञानं ज्ञानान्मुक्तिश्च जायते ।
इत्थं चिन्तयतो मेऽद्य तीर्थस्नानरता मतिः ॥ ४१ ॥
तदनुज्ञां प्रदातुं त्वं गुरो, मेऽर्हसि सत्वरम् ।
इति शिष्यवचः श्रुत्वा गुरुः प्रीतिसमाकुलः ॥ ४२
अनुज्ञामददात् क्षिप्रं तस्मै निर्मलचेतसे ।
तीर्थस्नानरतं चित्तं यद्यस्ति तव शङ्कर ॥ ४३ ॥
गन्तव्यमचिरेणैव त्वया सानुचरेण हि ।
चोरव्याघ्रादिसङ्कीर्णं मार्गं मुक्त्वा सुखं व्रज ॥ ४४
अध्वना सतरुच्छायातटाकाद्विजवेश्मना ।

भिक्षाशनं तु कर्तव्यं द्विजवेश्मसु सुव्रत ॥ ४५ ॥
विधूपे सन्नमुसल इति वाक्यानुसारतः ।
सन्ध्या मठेषु कर्तव्या निद्रा रात्रिषु शङ्कर ॥ ४६ ॥
मार्गेषु नेक्षणीयास्ते नरा नगरवासिनः ।
तद्देशो द्राक् (समुल्लंघ्य कर्तव्या तत्र न स्थितिः) ॥
दृष्ट्वा चेत् कुत्रचिन्नारीं तस्यां मातृमतिं कुरु ।
दीर्घमार्गप्रयाणेषु भवेत् सर्वं च शङ्कर । ४८ ॥
(हेमखण्डं निपतितं मार्गे दृष्टमनाथवत्) ।
लोष्टवद्दूरतस्त्यक्त्वा यायाः सुस्थिरमानसः ॥ ४९ ॥
प्रतिमा देवतानां च तत्र तत्र विलोकयन् ।
समवुध्याखिला नन्तुमर्हसि त्वं धृतादरम् । ५० ॥
सन्ततं सर्वमार्गेषु सज्जनैः सह सङ्गमे ।
तत्कथामृतपानेन विनेयोऽध्वश्रमो भृशम् ॥ ५१ ॥
अन्वितः सर्वमार्गेषु सज्जनैरमलात्मभिः ।
तीर्थयात्रां विधायैवं द्रुतमायाहि शङ्कर ॥ ५२ ॥
गुरोरिति मुखेन्दोस्तत् गळितं वचनामृतम् ।
कर्णरन्ध्रेण नीत्वान्तश्चक्रे च गुरुसंनतिम् ॥ ५३ ॥
उदीच्यां दिशि तीर्थानि पुण्यानि सकलानि सः ।
सेवमानोऽथ संप्राप्तः पुण्यं बदरिकाश्रमम् ॥ ५४ ॥
दिनानि तत्र सोऽवात्सीत् सुखं बदरिकाश्रमे ।
नानाविद्वज्जनव्रातैः सेव्यमानो महामतिः । ५५ ॥

वेदान्तसूत्रवेश्मान्तर्वर्तमानार्थदृष्टये ।
तदानीं सोऽकरोत् प्राज्ञः श्रीमद्भाष्यप्रदीपिकाम् ॥
सर्वदिग्व्याप्तभाष्यांशुः श्रीशङ्करदिवाकरः ।
तिरश्चक्रेऽखिलं लोके प्रतिवादितमोगणम् । ५७ ॥
निजनिर्मितसूत्राणां श्रुत्वा भाष्यनिबन्धनम् ।
तत्राजगाम सन्तुष्टः पराशरसुतो मुनिः । ५८ ॥
दृष्ट्वान्योन्यं व्यतनुतां सपर्यामुचितामुभौ ।
उवाच तदनु व्यासं शङ्करो हृष्टमानसः ॥ ५९ ॥
हे मुने! स्वागतं तेऽस्तु कृतार्थोऽस्मि त्वदीक्षणात् ।
अद्य मामनुगृह्णासि यत्तत्कर्मिदं त्वयि ॥ ६० ॥
येन त्वया त्रयी व्यस्ता लोकानुग्रहकाम्यया ।
तदीयार्थप्रकाशार्थं भारतं च महत् कृतम् । ६१ ॥
सन्दर्शिताखिलाम्नायमहार्थानि कृतानि च ।
अष्टादशपुराणानि त्वया येन महामुने ॥ ६२ ॥
लोकाननुजिघृक्षुस्त्वं लोके संचरसि ध्रुवम् ।
पूर्णकामाः किमन्यद्वै वाञ्छन्ति हि भवादृशाः ॥ ६३
तथाप्यागमने हेतुं तव पृच्छामि कौतुकात् ।
किमर्थमागतोऽसि त्वं सर्ववेदार्थपारग ॥ ६४ ॥
त्वदागमनजेनायं हर्षेणाविष्टचेतसः ।
महोत्सवनिभो विद्वन्, दिवसः प्रतिभाति मे ॥६५॥
इत्युक्तो यतिवर्येण शङ्करेण महात्मना ।

प्रत्युवाचातिहृष्टात्मा पाराशर्यो महामुनिः ॥ ६६ ॥
वेदान्तागमसूत्राणां रचितानां मया यते! ।
त्वया भाष्यं व्यधायीति श्रुत्वायातोऽस्मि साम्प्रतम् ।
तद्द्रष्टुं कौतुकेनालं त्वरते मम मानसम् ।
इत्युक्तो दर्शयामास स तस्मै भाष्यपुस्तकम् ॥ ६८ ॥
अपूर्वं तत् समादाय यतिवर्यविनिर्मितम् ।
यथावदखिलं वीक्ष्य वेदव्यासस्तमब्रवीत् ॥ ६९ ॥
विवृताखिलसूत्रार्थं विद्वज्जनमनोहरम् ।
हिताय सुतरामेतज्जायतेऽद्वैतवादिनाम् ॥ ७० ॥
अर्थामृतं यतिश्रेष्ठ! सूत्रदुग्धपयोनिधौ ।
आविष्कर्तुमिदं भाष्यं त्वत्कृतं मन्दरायते ॥ ७१ ॥
प्रमोदो मम जातोऽलमस्माद्भाष्यनिबन्धनात् ।
तस्मादस्य प्रतिष्ठां त्वं शिष्यादिषु यते, कुरु ॥ ७२ ॥
इत्युक्त्वा यतिवर्याय पुस्तकं स प्रदाय तत् ।
सन्तुष्टः सुतरां व्यासस्तिरोधानं गतोऽभवत् ॥ ७३ ॥

॥ इति श्रीशङ्कराचार्यचरिते तृतीयोऽध्याय. ॥

# चतुर्थोध्यायः ॥

---

**अथ श्रीशङ्कराचार्यः स्वमात्रा संस्मृतस्ततः ।**
**आत्मजन्मगृहं प्राप वायुमार्गेण सत्वरम् ॥ १**

नत्वा स जननीं तत्र समासन्नमृतिं निजाम् ।
शैवं च वैष्णवं रूपं पद्यैः कैश्चिदुपादिशत् ॥ २ ॥

सञ्चिन्त्य मुरजिद्रूपं यथावदसुनिर्गमे ।
यतिगम्यं पदं प्राप माता यतिवरस्य सा ॥ ३ ॥

संस्कर्तुं जननीमिच्छन्नलब्धद्विजपावकः ।
निधाय बहुकाष्ठानि कुण्डे शुष्काणि तानि सः ॥ ४ ॥

जातेन मथिताद्गाहोर्दक्षिणाद्दक्षिणाग्निना ।
प्रदीप्य मातरं तत्र जुहावाच्छिद्य शङ्करः ॥ ५ ॥

"आस्तां तावदियं प्रसूतिसमये दुर्वारशूलव्यथा
नैरुच्यं तनुशोषणं मलमयी शय्या च सांवत्सरी ।
एकस्यापि न गर्भभारभरणक्लेशस्य यस्याः क्षमो
दातुं निष्कृतिमुन्नतोऽपि तनयस्तस्यै जनन्यै नमः" ।

इमं मन्त्रं जपन् गुर्व्या मातृभक्त्या समन्वितः ।
कुण्डं प्रदक्षिणीकृत्य साष्टाङ्गं च ननाम सः ॥ ६ ॥

यतीन्द्रोऽथ रुषा शापं त्रयीबाह्या भवन्त्विति ।
दत्वा तत्रत्यविप्रेभ्यः प्राप्तो बदरिकाश्रमम् ॥ ७ ॥

अथागमद्द्विजेन्द्रस्तं कश्चित् भासा जितानलः ।
अधीतवेदो वेदाङ्गपारगो महिमालयः ॥ ८ ॥

सर्ववाञ्छाविहीनात्मा भवसागरभीतिमान् ।
आयातः स च ओंकारैर्ननाम शिरसा गुरुम् ॥ ९ ॥

पतितं निजपादाब्जे तमुत्थाप्य जगाद सः ।

कस्त्वं क्व धाम विप्रेन्द्र कुत आगमनं तव? ॥ १० ॥
इत्युक्तो द्विजवर्यस्तं बभाषे विनयान्वितः ।
शृणुष्व मम वृत्तान्तं देशिकेन्द्र, कृपानिधे ॥ ११ ॥
केरळेषु महाक्षेत्रं कैलासाचलसंनिभम् ।
श्रीकुण्डग्रामनामास्ति कीर्तनात्पुण्यवर्धनम् ॥ १२ ॥
यत्र नित्यं महादेवः पार्वतीशो विराजति ।
कुण्डस्थो जामदग्न्यस्य लोकानुग्रहतत्परः ॥ १३ ॥
क्षमादेवाः क्षमायुक्ताः पञ्चयज्ञपरायणाः ।
वेदाध्ययनशीलाश्च विद्यन्ते तत्र विश्रुताः ॥ १४ ॥
तेषां विद्वत्तमः कश्चित् द्विजवर्यो महागुणः ।
अनपत्यश्चिरं गेहे न्यवात्सीद्दारसंयुतः ॥ १५ ॥
सोमशर्माभिधानोऽसौ नृसिंहवपुषं हरिम् ।
तनयं लब्धुकामस्तं भेजे भक्तिसमन्वितः ॥ १६ ॥
तस्य विष्णोः प्रसादेन मत्पिता द्विजसत्तमः ।
मामेव तनयं लेभे नृसिंहा समन्वितम् ॥ १७ ॥
ततोऽहं विष्णुशर्माख्यः क्रमेण परिपोषितः ।
अभवं पितुरादेशात् सर्वविद्याब्धिपारगः ॥ १८ ॥
षोडशाब्दे समायाते गुरूणामाज्ञया मम ।
वर्णिभावे समाप्ते च दारिद्र्यविवशोऽभवम् ॥ १९ ॥
सोऽहं बहूनि वैश्यानां विहितानि यथेश्वर ।
क्रयविक्रयकर्माणि कुर्वन् समचरं चिरम् ॥ २० ॥

अथ नैर्धन्यशोकेन विहीनो निवसन् गृहे ।
अभूवं गन्तुकामोऽहं जातु देशान्तरं गुरोः ॥ २१ ॥
गजैरश्वैः खरैरुष्ट्रैर्वृषैश्च बहुभिर्युतः ।
नानादेशान् समुल्लंघ्य गतोऽहं निर्जनं वनम् ॥२२॥
सिंहव्याघ्रवराहाद्यैश्चोरैरपि निषेवितम् ।
महारण्यं मयि प्राप्ते भानुमानस्तमागमत् ॥ २३ ॥
स्नात्वा वननदीतोये तस्मिन् परिजनो मम ।
भुक्त्वा पीत्वा यथेष्टं वै निद्रामाप श्रमान्वितः । २४
द्रुमादिषु गजाश्वादीनाबध्य सुतरां दृढम् ।
पीतकेवलपानीयो भयेनाकृतभोजनः ॥ २५ ॥
अद्य कां विपदं यास्याम्यहमित्यनुचिन्तयन् ।
रात्रौ जागरणं कुर्वन्नवसं तत्र कानने ॥ २६ ॥
तदानीं मेघनिर्घातसदृशास्तत्र निस्वनाः ।
सिंहव्याघ्रादिजन्तूनां श्रूयन्ते स्म समन्ततः ॥ २७॥
तदा गजतुरङ्गाद्याः पाशान् छित्वा बलेन ते ।
दुर्निवारजवा भीत्या दुद्रुवुः ककुभो दश ॥ २८ ॥
दधानोऽध्वपरिश्रान्तिमाहूतोऽपि पुन पुनः ।
स्वपन् स्वजनसंघातः प्रबोधं नाव्रपद्यत ॥ २९ ॥
सञ्चरन्तो निशामध्ये च्छन्नवेषा धृतायुधाः ।
कृतान्तसदृशाश्चोरास्तत्रायातास्तदा वने ॥ ३० ॥
पुनःपुनः समाहूता नोत्थिताः सेवका जनाः ।
तेनातीव परिश्रान्तो निशामध्ये यतीश्वर ॥ ३१ ॥

तदा गजादीनादाय चोरा यान्ति स्म सत्वरम् ।
इत्थं बहुविधं दुःखमनुभूय महावने ॥ ३२ ॥
शृण्वन्नन्योन्यवचनं चोराणां धनहारिणाम् ।
कथञ्चित्तत्र नीत्वा तां क्षणदामतिदारुणाम् ॥ [illegible]
ईषद्रक्तरुचौ प्राच्यामर्कसारथितेजसा ।
अद्राक्षं तत्र किञ्चिन्न स्वपतः स्वजनादृते ॥ २३ ॥
अचिन्तयं तदा सोऽहं दैवध्वस्तमनोरथः ।
अनतिक्रमणीया स्यादहो! कालगतिर्नृणाम् ॥ ३४ ॥
तस्माज्जन्मविनाशाय यत्नः कार्यो मयाधुना ।
इत्येवं चिन्तयित्वाहमाचार्यं समुपागतः ॥ ३५ ॥
गुरो, युष्मत्कृपानावमाधिरुह्य भवार्णवम् ।
तितीर्षुरस्म्यहं नानाव्यसनोर्मिसुदुस्तरम् ॥ ३६ ॥
इत्थं कथितवृत्तान्तं द्विजवर्यं यतीश्वरः ।
यथोक्तं चक्षुषा दिव्येनापश्यत्सर्वमञ्जसा ॥ ३७ ॥
ततः संन्यासविधिना चक्रे तं यतिनं द्विजम् ।
ग्राह्यं चोपदिदेशास्मै समस्तं यतिसत्तमः ॥ ३८ ॥
दत्वा सनन्दनाभिख्यां तस्मै देशिकपुङ्गवः ।
उपादिशच्च वेदान्तं भाष्यं च निजनिर्मितम् ॥ ३९ ॥
तेन प्रथमशिष्येण रराज यतिपुङ्गवः ।
शरद्यधिकदीप्तेन भानुना भानुमानिव ॥ ४० ॥

॥ इति श्रीशङ्कराचार्यचरिते चतुर्थोऽध्यायः ॥

# पञ्चमाध्यायः ॥

ततो निषेव्य तीर्थानि सच्छिष्येण समन्वित. ।
संप्राप देशिकेन्द्रस्तं प्रयागं तीर्थमुत्तमम् ॥ १ ॥
तत्र तीर्थे मनुष्याणां स्मृतिमात्रफलप्रदे । .
संस्मृत्य जननीमुक्तिं सस्नौ यतिकुलेश्वर. ॥ २ ॥
यथावद्विहितस्नानस्तीरे तस्याथ पावने ।
भट्टाचार्यं ददर्शासौ संस्थितं तुषपावके । ३ ॥
परितः शिष्यवर्गेण ज्वलिताग्निसमद्युति ।
भट्टाचार्योऽपि तं दृष्ट्वा सशिष्यं यतिसत्तमम् ॥ ४ ।
पूजयामास विधिवत् शिष्यसंघैः समन्वितः ।
भिक्षां कृत्वा यतिश्रेष्ठः कुमारांशाय धीमते ॥ ५ ॥
दर्शयामास सुप्रीतः श्रीमद्भाष्यं महामतिः ।
भाष्यमालोक्य हृष्टात्मा भट्टाचार्यो यतीश्वरम् । ६।
निर्मत्सरो गुणग्राही निजगाद महामतिः ।
दर्शनं दुर्लभं नृणां यतीश्वर, भवादृशाम् ॥ ७ ॥
समासन्नशरीरान्ते समये तु विशेषतः ।
पुण्यैः पुरातनैरेव दृष्टोऽसि भगवन् मया ॥ ८ ॥
नृणां संसृतिमोक्षाय त्वादृशैः सङ्गतिर्भवेत् ।
चिरं दिदृक्षुरेवास्मि भगवन्तं यतीश्वर ॥ ९ ॥
कर्मकाण्डे रतिर्मेऽस्ति पूर्वमेव महामते ।
इदानीं भगवद्भाष्य श्रुत्वा ब्रह्मण्यपि स्थिरा ।

रतिर्जाता शरीरान्ते विशेषेण सुदुर्लभा ।
अस्मिन्नष्टौ सहस्राणि वार्तिकानां यतीश्वर ॥ ११ ॥
विभान्ति प्रथमे भाष्ये तत्कर्ता नालमस्म्यहम् ।
नाहमद्य मुमूर्षुश्चेत् करिष्याम्यद्य वार्तिकम् ॥ १२ ॥
ईदृश्या मे मुमूर्षाया हेतुं शृणु यतीश्वर ।
वेदमार्गे पुरा तेन सुगतेन सुबाधिते ॥ १३ ॥
तत्त्राणं कर्तुकामेन भृशं यत्नः कृतो मया ।
सौगतस्य मतं सम्यक् ज्ञात्वा तस्य निराकृतिः ॥
कर्तव्येति तु निश्चित्य तस्य शिष्योऽभवं ततः ।
एकदा वैदिकं मार्गं तथा सुगतदूषितम् ॥ १५ ॥
शृण्वतो मम नेत्राभ्यां शोकेनाश्रुकणोऽपतत् ।
तदाप्रभृति तच्छिष्या मयि शङ्कितमानसाः ॥ १६ ॥
अस्मच्छास्त्रनिरास्यैष द्विजातिरिति निश्चिताः ।
प्राणिहिंसापरास्तुङ्गात् सौधाग्रान्मामपातयन् ॥ १७
'यदि वेदः प्रमाणं स्यात् जीवेय'मिति चाब्रवम् ।
प्रयोगाद्यदिशब्दस्य तस्य सन्देहवाचिनः ॥ १८ ॥
शास्त्रश्रवणतो व्याजाद्विनष्टं पततोऽक्षि मे ।
ततो निरस्तवानस्मि बौद्धशास्त्रं तु युक्तिभिः ॥ १९ ॥
वेदमार्गं यथावत्तु प्रकाशं नीतवानपि ।
एवं लोकहितं कृत्वा वर्तमानस्य मे मुदा ॥ २० ॥
ईदृशी बुद्धिरुत्पन्ना निश्चिता यतिपुङ्गव ।

विरिञ्चांशो विश्वरूपो दृष्ट्वा तं यतिपुङ्गवम् ॥ ४२ ॥
आसनं परमं दत्वा ननाम शिरसा भुवि ।
सोऽन्तर्नीत्वा यतिश्रेष्ठं सशिष्यं भक्तिपूर्वकम् ॥ ४३
तत्पादपद्मं प्रक्षाल्य तज्जलं लोकपावनम् ।
शिरसा धारयामास सभार्यो द्विजसत्तमः ॥ ४४ ॥
ततः स विश्वरूपाख्यो यतिवर्यपुरोभुवि ।
अन्नमादाय विधिवत्सघृतं सोपदंशकम् ॥ ४५ ॥
यतिहस्ते जलं दत्वा भैक्षं दत्वा पुनर्जलम् ।
दत्वा जुषध्वमित्युक्त्वा तूष्णीमास कृताञ्जलिः ॥
ततः करगतं तोयमाचार्यो नापिबत् द्रुतम् ।
बभाषे च तदा पृष्टो द्विजेनाकुलचेतसा ॥ ४७ ॥
भोजनानन्तरं मह्यं वादं दाता भवान्यदि ।
पिबामि तोयमन्नं च भुञ्जेऽहं विप्रसत्तम ॥ ४८ ॥
अथाब्रवीत् द्विजश्रेष्ठो यतिश्रेष्ठं महामतिः ।
अहं वादं करिष्यामि न सन्देहो महामते ॥ ४९ ॥
इत्युक्तः स जलं पीत्वा भिक्षाशनमथाकरोत् ।
भिक्षानन्तरमादाय मुखशुद्धिं गृहाश्रमी ॥ ५० ॥
यतिश्रेष्ठाय दत्वा तं ननाम शिरसा भुवि ।
गृहीतानुमतिस्तस्मात् ततोऽभुङ्क्त द्विजोत्तमः ॥ ५१
बुभुजे तस्य भार्या च लब्धानुज्ञा निजप्रियात् ।
ततो भिक्षुवरः प्रोचे वादे यदि पराजितः ॥ ५२ ॥

अहं रक्ताम्बरं हित्वा ग्रहीष्यामि सिताम्बरम् ।
कृतप्रतिज्ञे तत्रेति प्रतिज्ञातं द्विजन्मना ॥ ५३ ॥
भिक्षुभावं गमिष्यामि यद्यहं तु पराजितः ।
ज्ञातुं जयाजयौ सूक्ष्मौ विदग्धा सत्यवादिनी ॥ ५४
वादे नौ तत्र साक्षीत्वे तिष्ठत्वेषा वधूर्मम ।
इति तौ यतिविप्रेन्द्रौ विद्वज्जनसभागतौ ॥ ५५ ॥
वाणीं कृत्वा तु साक्षीत्वे चक्रतुर्वादमद्भुतम् ।
श्रोतुकामास्तयोर्वादं ब्रह्माद्या निखिलाः सुराः ॥
समारूढविमानास्ते नभोमार्गमुपागताः ।
सस्मिताननपद्माभ्यां प्रगल्भाभ्यां प्रतिक्षणम् ॥५७॥
ताभ्यामुत्तरमन्योन्यमश्रमेणेव खण्डितम् ।
इत्थं विदधतोर्वादं तयोः शङ्करविप्रयोः ॥ ५८ ॥
दिनषट्कमतिक्रान्तं परस्परजयैषिणोः ।
सप्तमेऽहनि विप्रेन्द्रो मस्करीन्द्रेण धीमता ॥ ५९ ॥
पराजितस्तदा वाणी भाविकर्मेति निश्चिता ।
भर्तुरग्रे निधायाशु दण्डादीन् सा मनस्विनी ॥ ६०
मुनिशापविनिर्मुक्ता तिरोभावं जगाम सा ।
सत्यवादी स विप्रेन्द्रः पपात यतिपादयोः ॥ ६१ ॥
अनुक्तपूर्वमनृतं मया मस्करिपुङ्गव ।
इत्युक्त्वा वस्त्रदण्डादीनादाय स्वीकृताश्रमः ॥ ६२ ॥
पुनर्गुरुमुखाच्छ्रुत्वा श्रोतव्यं स यतीश्वरः ।

तत्रैव न्यवसन् सोऽपि गुरुशुश्रूषणे रतः ॥ ६३
विश्वरूपं विरिञ्चांशं लब्ध्वा शिष्यं यतीश्वरः ।
स्वमनोरथलाभेन सन्तुष्टः सुतरामभूत् ॥ ६४ ॥

॥ इति श्रीशङ्कराचार्यचरिते पञ्चमोऽध्याय. ॥

---

## षष्ठाध्यायः ॥

---

आचार्यस्य द्वितीयोऽयं शिष्यः संन्यासनामतः ।
सुरेश्वर इति ख्यातो बभूव मतिमत्तमः ॥ १ ॥
कृतानि देशिकेन्द्रेण भाष्याणि दश पञ्च च ।
तेषामुपनिषद्भाष्यदशकं स्यादनुत्तमम् ॥ २ ॥
श्रीमद्भाष्यस्य टीकाख्यं व्याख्यानममितद्युतिः ।
श्रीमत्सनन्दनाचार्यश्चकार ब्रह्मवित्तमः ॥ ३ ॥
नैष्कर्म्यसिद्धिमकरोत् सुरेश्वरसमाह्वयः ।
वार्तिकद्वितयं चापि स चकार महामतिः ॥ ४ ॥
एवंभूतौ तु तौ शिष्यौ यतीन्द्रस्य बभूवतुः ।
नृहरेरंशभूतस्तु सनन्दनसमाह्वयः ॥ ५ ॥
विरिञ्चस्यांशभूतस्तु सुरेश्वरसमाह्वयः ।
हस्तामलकसंज्ञोऽभूत् तस्य शिष्यो महान् गुरोः ॥
तत्प्रकारं प्रवक्ष्यामि शिष्य, त्वं शृणु सादरम् ।

गोकर्णं यातुकामः सन्नेकदा देशिकेश्वरः ॥ ७ ॥
मार्गे शिवविहाराख्यं ग्रामं प्रापदनुत्तमम् ।
अग्निचिद्भिस्त्रयीविद्भिः सर्वशास्त्रविशारदैः ॥ ८ ॥
सदादानरतैः शान्तैरन्वितं ब्राह्मणोत्तमैः ।
द्विजानां विहरन्मध्ये शिवो गिरिसुतान्वितः ॥ ९ ॥
यस्य नाम यथार्थं हि करोति करुणानिधिः ।
सर्वलक्षणसम्पन्नं वेदाध्ययनमन्वहम् ॥ १० ॥
द्विजानां यत्र गूढात्मा शृणोति चतुराननः ।
यत्र पान्थजनो नित्यं प्रीतियुक्तेन चेतसा ॥ ११ ॥
करोति विश्रमं भुक्त्वा यथेष्टं च दिवानिशम् ।
द्विजाहुतहविर्गन्धो यत्र पुण्यतमो महान् ॥ १२ ॥
नीयमानोऽल्पवातेन जनानां संहरत्यघम् ।
आसीत्तस्मिन् द्विजश्रेष्ठो वेदोक्तविधितत्परः ॥ १३ ॥
स्वदारतुष्टोऽनुदिनं पूजयन्नतिथीन्मुदा ।
कश्चित्तस्यात्मजो जज्ञे चक्षुरादिप्रवृत्तिषु ॥ १४ ॥
चेष्टासु च करादीनां निराशः सर्वदाभवत् ।
बुभुक्षुर्न पिपासुश्च नाभवत्स कदाचन ॥ १५ ॥
पिपीलिकादिसंदष्टे स्वदेहेऽप्यविकारवान् ।
एवंविधं सुतं दृष्ट्वा पिता चिन्तापरः सदा ॥ १६ ॥
गोभूहिरण्यदाराद्यैरन्वितोऽपि शुचं दधौ ।
श्रुत्वा तत्रागतं विप्रः सपुत्रः प्राप्य देशिकम् ॥ १७

मूर्ध्ना प्रणम्य सोऽपृच्छत् सुतनैराश्यकारणम् ।
जनेरारभ्य कुत्रापि विद्यते नैव कांक्षितम् ॥ १८ ॥
मत्सुतस्यास्य नीतोऽपमुपनीतिं कथंचन ।
जाड्यहेतुं यतीन्द्र, त्वं मत्सुतस्य वद प्रभो ॥ १९ ॥
भवादृशा हि जानन्ति सर्वं च विमलात्मना ।
इति पृष्टो यतिश्रेष्ठः सोऽपृच्छत् द्विजनन्दनम् ॥ २० ॥
कस्त्वं द्विजात्मजैवं किं वर्तसे जडवत् सदा? ।
बालोऽप्यबालबुद्धिस्तमुत्तरं निजगाद सः ॥ २१ ॥
हृद्यैर्द्वादशभिः पद्यैः प्रकाशितचिदात्मकैः ।
करस्थधात्रीफलवच्चित्स्वरूपं प्रकाशितम् ॥ २२ ॥
तत्पद्यैर्हि ततोऽस्याख्या हस्तामलक इत्यभूत् ।
द्विजपुत्रं निवृत्तं तं विज्ञाय यतिपुङ्गवः ॥ २३ ॥
ऊचे तत्पितरं नेह वस्तुं योग्यस्तवात्मजः ।
देहगेहादिममता विद्यते नास्य भूसुर ॥ २४ ॥
बोधेनायं तमो हित्वा परमं धाम पश्यति ।
इत्युक्त्वा विप्रसूनुं तं गृहीत्वा प्रस्थितो गुरुः ॥ २५
किञ्चित्तमनुगम्याथ स्वगेहं प्राप्तवान् द्विजः ।
आचार्यो यतितां नीत्वा तं च भूसुरनन्दनम् ॥ २६
महात्मभिस्त्रिभिः शिष्यैर्विरेजे सुतरां गुरुः ।
तुरीयः कोऽपि शिष्योऽभूदाचार्यस्य ततो महान् ॥
तोटकाख्याभवत्तस्य शिष्य, तत्कारणं शृणु ।

विनीतोऽमितसत्योक्तिर्दयालुः सुतरां गुरोः ॥ २८ ॥
शुश्रूषातत्परः सोऽभूत् छायेवानुसरन् सदा ।
गुरौ तिष्ठति वै तिष्ठन् गच्छन् गच्छति सन्ततम् ॥
गुरोः श्रीवस्त्रकौपीननीर्मलीकरणे रतः ।
दन्तकाष्ठप्रदाता च स्नानकाले यथोचितम् ॥ ३० ॥
गुरोस्तु देवपूजायां जलाद्याहरणे रतः ।
गुरोः श्रीमत्पदांभोजसंवाहनविचक्षणः ॥ ३१ ॥
इत्थं निजगुरौ भक्तिं निर्व्याजां निश्चलां भृशम् ।
बिभ्रतः सर्वदा तस्य मुखांभोजात् कदाचन ॥ ३२ ॥
पद्यजातमुदारार्थमद्वैतप्रतिपादकम् ।
तोटकाख्यमभूत्तस्मात् तोटकाख्यो बभूव सः ॥ ३३
स्वेच्छानुवृत्तिनिरतान् देशिकेन्द्रः सुविश्रुतान् ।
लेभे शिष्यवरानेवं चतुरस्तत्त्ववेदिनः ॥ ३४ ॥
संन्यासमूलः सच्छायः शिष्यशाखामहत्तमः ।
ज्ञानपुष्पोऽमृतफलो रेजे शङ्करपादपः ॥ ३५ ॥

॥ इति श्रीशङ्कराचार्यचरिते षष्ठोऽध्यायः ॥

---

## सप्तमाध्यायः ॥

---

एतैः शिष्यवरैः सार्धं चतुर्भिर्देशिकोत्तमः ।
तीर्थस्नानरतो धीमान् चचार भुवि सर्वतः ॥ १ ॥

एकदा स हरिद्वारं शनैर्गन्तु समुद्यतः ।
मार्गश्रमहरं पुण्यं तन्माहात्म्यमत्रोचत ॥ २ ॥
पुराभूदुत्कले देशे कोऽपि धर्मरतो द्विजः ।
तस्यासीत्तनयः कश्चित् प्रकामं दुष्टमानसः ॥ ३ ॥
व्याधैः सह मृगान् हत्वा विचरन् विपिनेषु सः ।
तपोधनस्य कस्यापि शापात्प्राप पिशाचताम् ॥ ४ ॥
अतीव विवशो दीनः क्षुधया च पिपासया ।
असौ निपतितोऽरण्ये मूर्छां प्राप कदाचन ॥ ५ ॥
तदा स्नात्वा हरिद्वारे काचिद्गन्धर्वसुन्दरी ।
हरविष्णुगणेशाद्या नत्वा तत्रत्यदेवताः ॥ ६ ॥
प्रणन्तुं रामनाथं तं त्वरया गगनाश्रिता ।
जगाम तस्या वासोऽम्बु पिशाचे मूर्छितेऽपतत् ॥ ७ ॥
गङ्गासलिलमाहात्म्यादुत्थितः सत्वरं ततः ।
अपश्यत्सर्वमाशान्तं पिशाचः शान्तमानसः ॥ ८ ॥
दृष्ट्वा स्वनिकटे कण्वं मूले वटतरोः स्थितम् ।
आसाद्य विनयोपेतः पृष्टवांस्तं महामुनिम् ॥ ९ ॥
शान्तबुद्धिरहं कस्मादिदानीं मुनिपुङ्गव ।
तत्र हेतुं वदास्माकं सर्वज्ञो हि भवान्मुने ॥ १० ॥
इति पृष्टः पिशाचेन कण्वो मुनिवरोऽब्रवीत् ।
जन्मप्रभृति दुर्बुद्धेः, शृणु, ते शमकारणम् ॥ ११ ॥
स्नात्वा तत्र हरिद्वारे तीर्थे भुवनपावने ।

गन्धर्वमहिळा काचिद्यातायाकाशमाश्रिता । १२ ।
निरस्तो वसनात्तस्य गङ्गाजलकणोऽपतत् ।
सर्वपापहरोऽरण्ये मूर्छिते पतिते त्वयि ॥ १३ ॥
तस्य तीर्थस्य माहात्म्यात् प्रबुद्धोऽसि पिशाचक ।
तत्र स्नात्वा ततो याहि त्रिदिवं क्षीणकल्मषः ॥ १४
इत्युक्तो मुनिना तेन पिशाचः प्रीतमानसः ।
हरिद्वारे कृतस्नानो दिव्यमूर्तिर्दिवं ययौ ॥ १५ ॥
इत्युदीर्य कथां रम्यां सर्वपातकहारिणीम् ।
हरिद्वारमुपागम्य सशिष्यो देशिकोऽवसत् ॥ १६ ॥
श्रीपद्मपाद इत्येवं गुणनाम सुविश्रुतम् ।
प्राप्तः सनन्दनाचार्य शिष्य, तत्कारणं शृणु ॥ १७
स्थिते पुण्यतमे तस्मिन् गङ्गाद्वारे यतीश्वर ।
आसीज्जातु, मिथः स्पर्धा सनन्दनसुरेशयोः ॥ १८ ॥
ततः सुरेश्वरः प्रोचे विविक्ते देशिकोत्तमम् ।
अद्याचार्य, त्वया कार्यं स्नाने किञ्चित् प्रियं मम ॥
प्रदातुमङ्गवस्त्रं ते संप्राप्ते तु सनन्दने ।
तदा नाभिमिते तोये स्थित्वा हस्तः प्रसार्यताम् ॥
तावदागम्य यदि चेदङ्गवस्त्रं प्रदास्यति ।
व्रतोऽपि तर्हि भग्नः स्यादंभ्वनाक्रमलक्षणः ॥ २१ ॥
अन्यथा तस्य नास्तिक्यमप्रकाश्यं प्रकाशितम् ।
गुरुः सुरेश्वरेणोक्तं तत्तथैव चकार सः ॥ २२ ॥

सनन्दनस्य माहात्म्यं कर्तुं लोके प्रकाशवत् ।
महाप्राज्ञो महायोगी सनन्दनयतीश्वरः ॥ २३ ॥
जले तृणानि विक्षिप्य पादन्यासं तदाकरोत् ।
यत्र यत्र पदन्यासं चक्रेऽसौ तत्र तत्र हि ॥ २४ ॥
सलिलोपरि पद्मानि संजातानि विरेजिरे ।
पद्मविन्यस्तपादाग्रो गुरवे स सनन्दनः ॥ २५ ॥
विततार जलस्थाय देहसंमार्जनांबरम् ।
तदानीं विस्मयोत्फुल्लमानसास्त्रिदिवौकसः ॥ २६ ॥
श्रीपद्मपादनामास्मै ददुर्लोके सुविश्रुतम् ।
एवं स्थितेऽथ काले तु हरिद्वारे महामतिः ॥ २७ ॥
रामसेतुं महापुण्यं द्रष्टुकामः कदाचन ।
स्वशिष्यैरन्वितो मोदात् प्रतस्थे यतिपुङ्गवः ॥ २८ ॥
दक्षिणां दिशमुद्दिश्य प्रास्थितो देशिकेश्वरः ।
गत्वा बहुविधान् देशान् स्नात्वा तीर्थजलेषु सः ॥
श्रीकाळहस्तिसंज्ञं तं क्षेत्रं त्रैलोक्यविश्रुतम् ।
सर्वपापहरं पुण्यं भुक्तिमुक्तिप्रदं नृणाम् ॥ ३० ॥
श्रीमद्दक्षिणकैलाससंज्ञं च पृथिवीतले ।
तत्र गत्वा यतिश्रेष्ठः सुवर्णमुखरीजले ॥ ३१ ॥
स्नात्वा तु विधिवत्पुण्ये शिष्यवर्गसमन्वितः ।
उपेत्य संनिधिं देवमद्राक्षीद्गिरिजापतिम् ॥ ३२ ॥
नानादीपप्रभाजालनिर्धूततिमिरोदरे ।

अद्भुते भवने भान्तं प्रभामण्डलमण्डितम् ॥ ३३ ॥
पुष्पमालासुगन्धेन सुरभीकृतदिङ्मुखम् ।
प्रत्युप्तदिव्यरत्नौघहेमाभरणभूषितम् ॥ ३४ ॥
व्याघ्रचर्माम्बरधरं सर्पजालविभूषितम् ।
जटाजूटाग्रसन्नद्धमुग्धचन्द्रकलान्वितम् ॥ ३५ ॥
विधिविष्णुमहेन्द्राद्यैर्निगूढाकृतिभिः सुरैः ।
सेव्यमानं मनुष्यैश्च भूरिपुण्यचयैः सदा ॥ ३६ ॥
दृष्ट्वा तं शङ्करो देवं भवान्या सहितं भवम् ।
स्तुत्वा चोपनिषद्वाक्यैर्ननाम भुवि दण्डवत् ॥ ३७ ॥
पुनः प्रदक्षिणं कृत्वा वन्दित्वा च पुनःपुनः ।
तस्मादघहरात् क्षेत्रात् प्रस्थितो देशिकेश्वरः ॥ ३८ ॥
निर्वाणधाम नृणां तत् काञ्चीपुरमवाप सः ।
काञ्चीपुरमवाप्तोऽयं शङ्करो यतिपुङ्गवः ॥ ३९ ॥
कथयामास शिष्येभ्यस्तन्माहात्म्यमनुत्तमम् ।
भूसुरेन्द्रो धरेन्द्रो वा वैश्योऽपि वृषलोऽपि वा ॥ ४०
अन्त्यजो वा मृतस्तस्मिन्नमृतो भवति ध्रुवम् ।
अनेकजन्मजं कर्म कृतवानपि मानुषः ॥ ४१ ॥
अत्र पञ्चत्वमापन्नो मुक्तो भवति मानवः ।
कृत्वा क्षेत्रान्तरालेऽस्मिन् शिरोमात्रं मृतो नरः ॥
योऽस्माद्बहिर्गतान्याङ्गः सोऽपि याति परं पदम् ।
तथा मृतः पुरा कश्चित् भूरिपातकसञ्चयः ॥ ४३ ॥

उभयेऽपि परीतास्तं विष्णुदूता यमस्य च ।
स्थित्वा तस्योपशीर्षान्ते विष्णुदूता महाबलाः ॥ ४४
पादाग्रे तस्थिवांसोऽन्ये वादानेवमकुर्वत ।
विष्णुदूताः– शिरः सकलगात्रस्य प्रधानं हि विधाय तत् ॥
अस्मिन् पुरे मृतोऽयं वै नेयोऽस्माभिरसंशयम् ।
यमदूताः– मृतस्याङ्गनिवेशस्य विशेषः किं नु कथ्यते ?॥
सर्वत्रापि मृतानां तु यमः शास्ता दुरात्मनाम् ।
जन्मप्रभृति पापिष्ठः पुरुषोऽयं मृतिं गतः ॥ ४७ ॥
दण्ड्योऽयं नरके तस्मान्नेयोऽस्माभिर्न संशयः ।
विष्णुदूताः- काञ्च्या बहिर्मृतो जन्तुर्नेयो वः कृतकिल्बिष.
नेतव्यो विष्णुलोकं हि काञ्चीपुरमृतो नरः ।
इत्युक्त्वा विष्णुदूतेषु गृहीत्वा तं गतेषु ते ॥ ४९ ॥
यमदूता गताः सर्वे लज्जाभीतिसमाकुलाः ।
तद्वृत्तमखिलं श्रुत्वा स्वदूतेभ्यः परेतराट् ॥ ५० ॥
तानुवाच रहस्येवमात्मदूतान् कृपान्वितः ।
अस्माकमपि सर्वेषामीश्वरौ हरमाधवौ ॥ ५१ ॥
यूयं नमत भक्त्या तौ दूता, मामिव सर्वदा ।
गन्तव्यं दूरतस्त्यक्त्वा युष्माभिर्भुवनत्रये ॥ ५२ ॥
हरे, कृष्ण, महादेव, राम, नारायणाच्युत ।
हर, शंभो, शिवेत्यादिनाम्नां विष्णुगिरीशयोः ॥५३॥
सकृदेकाक्षरं चापि सर्वपातकनाशनम् ।

ब्रुवतोऽन्तगतान्मर्त्यान् दूर मुञ्चत किङ्कराः ॥ ५४ ॥
साळग्रामशिलापूजां शिवलिङ्गार्चनं तथा ।
कुर्वतो मानुषान् सर्वान् मृतान् मुञ्चत किङ्कराः ॥
यः शृणोति च वेदान्तं जिज्ञासुः परमं पदम् ।
भिक्षुको वा गृहस्थो वा तं च मुञ्चत दूरतः ॥ ५६ ॥
काञ्चीपुरे च काश्यां च पुण्यक्षेत्रे तथापरे ।
मानुषा ये मृतिं यान्ति तान् दूतास्त्यजताखिलान् ॥
भेदबुद्धिर्न कर्तव्या देवयोरुभयोस्तयोः ।
विष्णुशङ्करयोर्नित्यं तावुभावैक्यगामिनौ ॥ ५८ ॥
शिवभक्तो हि विष्णुं च विष्णुभक्तांश्च निन्दति ।
यो योऽस्य विपरीताश्च तावुभौ नयताशु माम् ॥५९
सन्त्यजन्त्यात्मदारान् ये परदारसमुत्सुकाः ।
तान्मृतानाशु मे लोकं नयध्वं किङ्करा, नरान् ॥
पशुपक्षिगणं यान्तं तृष्णार्तं सलिलाशयम् ।
यो वारयति दुर्बुद्धिस्तं च मां नयताञ्जसा ॥ ६१ ॥
यो निजाश्रमविभ्रष्टश्चतुराश्रमवासिनाम् ।
निरये सोऽपि दण्ड्यः स्यात् किङ्करा, मम शासनात् ॥
अर्थं प्रतिश्रुतं पूर्वं यो ददाति न लोभतः ।
प्राग्दत्तं हरते यश्च तौ यातो द्वौ दरिद्रताम् ॥ ६३ ॥
स्वर्णचोरः सुरापायी ब्रह्मघ्नो गुरुतल्पगः ।
तत्संयोगीति पञ्चैते महापातकिनो नराः ॥ ६४ ॥

ये च विश्वस्तहन्तारो ये चोपकृतविस्मृतिम् ।
प्रयान्ति ते च दण्ड्याः स्युर्नरके बहुवत्सरान् ॥ ६५
अदण्ड्यलक्षणं पूर्वं मया सर्वमुदीरितम् ।
विचार्यैवाखिला नेया मल्लोकं पापिनो मृताः ॥ ६६
आदिश्यैवं यमो भृत्यानुवास निजविष्टपे ।
न्यवसद्विष्णुलोके च काञ्चीपुरमृतो नरः ॥ ६७ ॥
इति काञ्चीपुरं प्राप्तः शङ्करो देशिकेश्वरः ।
शिष्येभ्यः कथयामास तन्माहात्म्यकथामृतम् ॥ ६८

॥ इति श्रीशङ्कराचार्यचरिते सप्तमोऽध्यायः ॥

---

# अष्टमाध्यायः ॥

---

एकाम्रनाथं देवेशं काञ्चीपुरनिवासिनम् ।
देवीमल्लाळनाथं च नत्वा यातस्ततो गुरुः ॥ १ ॥
अथ भिक्षुवरः पुण्यं पुण्डरीकपुरं ययौ ।
यत्र नृत्यति देवेशः शङ्करः सर्वदादरात् ॥ २ ॥
यत्र नृत्तं समालोक्य पार्वती हरवल्लभा ।
करताळं महादेवी करोति मुदितानना ॥ ३ ॥
अत्र किं वर्तते तीर्थमिति पृष्टो यतीश्वरैः ।
शिवपादांबुजासक्तचित्तः कश्चिन्नरोऽब्रवीत् ॥ ४ ॥
शिवगङ्गेति विख्यातं तीर्थमत्र यतीश्वराः ।

यत्र मज्जन् भवांभोधौ पुनर्नैव निमज्जति ॥ ५ ॥
नृणां संसारविच्छित्त्यै शंभु करुणया स्वयम् ।
अस्मिन् गङ्गाजलं किञ्चित् क्षिप्तवानिति केचन ॥ ६
नृत्तश्रमापनोदाय भर्तुः प्रणयविह्वला ।
गङ्गैव स्वयमायाता क्षेत्रेऽस्मिन्निति केचन ॥ ७ ॥
नृत्यद्धूर्जटिकोटीरात्पतितं जाह्नवीजलम् ।
किञ्चिदत्रेति तन्प्राहु शिवगङ्गेति केचन ॥ ८ ॥
तस्यास्तु शिवगङ्गायाः शुद्धिं वर्णयितुं पराम् ।
सर्वज्ञः स्वयमेवासौ शक्तो जगति नापरः ॥ ९ ॥
पद्मनाभमुखा देवास्तीर्थे तस्मिन् दिने दिने ।
स्नात्वा शिवार्चनं कृत्वा भक्त्या पश्यन्ति ताण्डवम् ॥
शतयोजनदूरस्थः शिवगङ्गेति यो वदन् ।
निमज्जति स च क्षिप्रं शुद्धो याति परं पदम् ॥ ११
इत्युक्तास्ते यतिश्रेष्ठाः शिवभक्तेन केनचित् ।
श्रीशङ्करमुखाः स्नात्वा शिवगङ्गाजले शुचौ ॥ १२ ॥
हर शंभो महादेव देवदेव दयानिधे ।
अस्मान् भक्तिसमायुक्तानुद्धराशु भवार्णवात् ॥
इति सङ्कीर्तनं कृत्वा गत्वान्तर्भवनं शुभम् ।
अपश्यन् गिरिजाकान्तं लोकत्रितयनायकम् ॥ १४
शारदांबुदसङ्काशं बालचन्द्रावतंसकम् ।
आशाव्यापृतदोर्दण्डं शार्दूलाजिनवाससम् ॥ १५ ॥

भूषणोज्ज्वलसर्वाङ्गं नृत्तं कुर्वन्तमद्भुतम् ।
वेदान्तागमपद्मान्तर्गूढानन्दमधुव्रतम् ॥ १६ ॥
स्तुत्वा नत्वा च तं देवं सशिष्यो यतिपुङ्गवः ।
रामसेतुमनुस्मृत्य प्रस्थितोऽभूत्ततो मुदा ॥ १७ ॥
गच्छन्नध्वनि कावेरीं सरितं सन्ददर्श सः ।
यत्र स्नात्वा हरौ भक्तिं मुक्तिदां लभते नरः ॥ १८ ॥
यस्याः पावनतोयाया मध्ये स्वर्णमयं हरेः ।
क्षेत्रमाभाति विख्यातं लोके श्रीरङ्गसंज्ञितम् ॥ १९ ॥
तत्र स्नात्वा यतीन्द्रस्तं सशिष्यः कमलापतिम् ।
ददर्श भोगिशय्यायां भान्तं श्रीरङ्गनायकम् ॥ २० ॥
राजन्नखमणिव्रातसंशोभितपदांबुजम् ।
इन्द्रनीलमहादण्डचारुजंघायुगान्वितम् ॥ २१ ॥
हस्तिहस्तसमुल्लासिवृत्तपीनोरुभासुरम् ।
स्वर्णकाञ्चीलतानद्धपीतांबरविराजितम् ॥ २२ ॥
नाभीसरसिजावासचतुर्मुखसमीडितम् ।
निश्शेषभुवनन्यासमन्दिरोदरसुन्दरम् ॥ २३ ॥
श्रीवत्सोद्योतसंमिश्रकौस्तुभद्युतिमण्डितम् ।
इन्दिरासुन्दरागारवक्षःस्थलमनोहरम् ॥ २४ ॥
शंखचक्रासिशार्ङ्गादिविद्योतितकरांबुजम् ।
शारदेन्दुमनोहारिसुषमाभासुराननम् ॥ २५ ॥
कारुण्यतटिनीवीचिनृत्यन्नेत्रसरोरुहम् ।

दधानं हेममकुटं कोटिमार्ताण्डभास्करम् ॥ २६ ॥
निर्जितांभोधरच्छायं कमलामेदिनीयुतम् ।
तुलसीदामसौरभ्यलुब्धसंभ्रान्तषट्पदम् ॥ २७ ॥
नत्वा तस्य पदांभोजे रङ्गनाथस्य शङ्करः ।
अर्चयित्वा ततः स्तुत्वा प्रतस्थे शिष्यसंयुतः ॥ २८
रामसेतुमथासाद्य सशिष्यो यतिपुङ्गवः ।
धनुष्कोटिमहातीर्थे स्नानं कृत्वा यथाविधि ॥ २९ ॥
अस्मत्पापानि सर्वाणि संहराशु दयानिधे ।
नमस्ते रामनाथेति ननाम शिरसा शिवम् ॥ ३० ॥
रामनाथाभिधानोऽभूत् कुतोऽसौ गिरिजापतिः ।
इति पृष्टस्तदा शिष्यैराचार्योऽकथयन्मुदा ॥ ३१ ॥
पुरा दशाननं हत्वा युद्धरङ्गे स राघवः ।
अभिषिच्य च तद्राज्ये निजभक्तं विभीषणम् ॥ ३२
अग्निशुद्धां समादाय जानकीं प्रमदोत्तमाम् ।
ससैन्यो मुनिभिः सार्धमगस्त्याद्यैः पुरीं ययौ ॥
स गच्छन् सेतुमार्गेण धनुष्कोट्या रघूत्तमः ।
छित्वा स्थानत्रये सेतुं बभाषे कुंभसंभवम् ॥ ३४ ॥
शिवलिङ्गं प्रतिष्ठाप्य सेतावत्र महामुने ।
गन्तुमिच्छाम्यहं तत्र सहायो भव मे गुरो ॥ ३५ ॥
तथेत्युक्तस्ततो रामो मुनिना भरताग्रजः ।
हनूमन्तमुवाचैवं महाबलपराक्रमम् ॥ ३६ ॥

हनूमन, नर्मदां गत्वा लिङ्गमानय सत्वरम् ।
अधुना तत्प्रतिष्ठायै मुहूर्तः संनिधिं गतः ॥ ३७ ॥
इत्युक्तो मारुतिस्तेन नर्मदां प्राप्य सत्वरम् ।
विचित्य तज्जले लिङ्गं नापश्यत्तरसैव सः ॥ ३८ ॥
समागते मुहूर्ते च मारुतावप्यनागते ।
राघवः संभ्रमोपेतः कुंभोद्भवगिरा ततः ॥ ३९ ॥
तत्रैव वर्तमानं सच्छिन्नलिङ्गं पुरातनम् ।
स्थापयित्वा यथावत्तन्नाम जनितादरम् ॥ ४० ॥
आजगाम ततो वेगात् सलिङ्गो मारुतात्मजः ।
तत्र लिङ्गान्तरं दृष्ट्वा स्थापितं स रुषं ययौ ॥ ४१ ॥
रामस्तमब्रवीत् वीरं हनूमन्तं कृपान्वितः ।
कस्मात् त्वं रोषमायासि वत्स मारुतनन्दन ॥ ४२ ॥
हनूमानब्रवीद्रामं ततः कोपसमन्वितः ।
स्वामिना मत्प्रयत्नो हि मानुषेन्द्र, वृथा कृतः ॥ ४३
एतल्लिङ्गं समुद्धृत्य मयानीते प्रतिष्ठिते ।
शमं यास्यति मे कोपो नान्यथा भक्तवत्सल ॥ ४४
इत्युक्तो रघुवीरस्तं प्रोवाच पवनात्मजम् ।
स्थापितं लिङ्गमुद्धर्तुं नैव शक्तोऽस्मि मारुते ॥ ४५ ॥
इदं लिङ्गं समुद्धृत्य त्वमेव पवनात्मज ।
स्थापयाशु त्वयानीतं नर्मदालिङ्गमुत्तमम् ॥ ४६ ॥
बलिनाथ कपीन्द्रेण लिङ्गं लांगूलवेष्टितम् ।

उत्कृष्टं नाचलत् किन्तु त्रिलोकी चलिताखिला ॥
चचाल मेदिनी सर्वा सवनाब्धिनदीनगा ।
निद्रां तत्याज पद्माक्षः समाधिं मुनयोऽत्यजन् ॥ ४८
निजपुच्छेन तल्लिङ्गं बद्ध्वा बभ्राम मारुतिः ।
स पपात ततो दूरे मूर्छितो रुधिरं वमन् ॥ ४९ ॥
'अद्यापि वर्तते तीर्थे तद्वान्तं शोणितं महत् ।
तन्नामविश्रुते कुण्डे सर्वपापहरं नृणाम् ॥ ५० ॥
लब्धसंज्ञः शनैर्गत्वा लिङ्गात्मानं शिवं नमन् ।
अप्रमेयानुभावं तमस्तौषीत् कपिसत्तमः ॥ ५१ ॥
नमस्ते सर्वलोकेश, पाहि मां भक्तवत्सल ।
अपराधं ममाशेषं क्षमस्व करुणानिधे ॥ ५२ ॥
देवदेव जगन्नाथ पार्वतीवर शङ्कर ।
ममाज्ञानकृतं पापं क्षमस्व सकलं विभो ॥ ५३ ॥
यामाहुः सर्वभूतानां प्रकृतिं सृष्टिवेदिनः ।
या च गन्धगुणा तस्यै धरामूर्त्यै नमोऽस्तु ते ॥ ५४
या सृष्टा प्रथमं धात्रा सर्वसृष्टिकृता विभो ।
या वै रसगुणा तस्यै तोयमूर्त्यै नमोऽस्तु ते ॥५५॥
विधिवद्द्विजवृन्देन हुतं वहति या हविः ।
या च रूपगुणा तस्यै वह्निमूर्त्यै नमोऽस्तु ते ॥ ५६
प्राणवन्तो भवन्त्येते प्राणिनः सकला यया ।
या च स्पर्शगुणा तस्यै वायुमूर्त्यै नमोऽस्तु ते ॥ ५७

इदं चराचरं विश्वं याखिलं व्याप्य वर्तते ।
या च शब्दगुणा तस्यै नभोमूर्त्यै नमोऽस्तु ते ॥ ५८
ऋतुमासायनद्वन्द्वदिनरात्रीः करोति या ।
या चोद्भूततमास्तस्यै भानुमूर्त्यै नमोऽस्तु ते ॥ ५९ ॥
वितीर्णकुमुदामोदा जगतां तापहारिणी ।
या च ते भूषणं तस्यै चन्द्रमूर्त्यै नमोऽस्तु ते ॥ ६०
या तु वेदोदितं मार्गं निर्वहन्तीह विद्यते ।
यजमानात्मिकां मूर्तिं तावकीं तां नमाम्यहम् ॥ ६१
यद्गन्धमात्रमाजिघ्रन्म्रियते प्राणिसञ्चयः ।
कालकूटः स ते यस्य कण्ठभूषणतामगात् ॥ ६२ ॥
त्रिलोक्यां नाशकर्तारो ये वै ते त्रिपुरासुराः ।
भस्मीकृताः क्षणेनैव यस्य ते, नयनाग्निना ॥ ६३ ॥
तं त्वामिमं जगन्नाथमुद्धर्तुं कृतनिश्चयात् ।
मदन्यः कोऽपि मूढात्मा विद्यते न जगत्त्रये ॥ ६४॥
तत्क्षन्तव्यस्त्वया सर्वोऽप्यपराधो मम प्रभो ।
भक्तस्य तव भृत्यस्य सुतरां मूढचेतसः ॥ ६५ ॥
इति स्तुतेन तुष्टेन देवेन करुणाब्धिना ।
कं वरं वांछसीत्युक्तो हनुमानित्युवाच सः ॥ ६६ ॥
तावकं लिङ्गमानीतं यत्नेन भगवन्, मया ।
प्रतिष्ठामस्य वाञ्छामीत्यर्थितो विभुरब्रवीत् ॥ ६७ ॥
अन्तस्सालं त्वया लिङ्गं स्थापितव्यमिदं दिशि ।

उत्तरस्यां जगत्येतत्त्वन्नाम्ना ख्यातिमेष्यति ॥ ६८ ॥
त्वत्पूजितं कपे, लिङ्गं पूर्वमालोक्य मानुषाः ।
द्रष्टारो मां नचेत्तेषां दर्शनेन भवेत् फलम् ॥ ६९ ॥
शंभोरिति समादेशं राघवस्यापि लब्धवान् ।
प्रतिष्ठां मारुतिर्निन्ये स्वानीतं लिङ्गमैश्वरम ॥ ७० ॥
रामेश्वर इति ख्यातो रामपूजित ईश्वर ।
हनूमत्पूजितोऽन्यस्तु विश्रुतोऽभूत्तदाख्यया ॥ ७१ ॥
सेतुस्नानं महापुण्यं कृत्वा चेश्वरवन्दनम् ।
दानादिसुकृतं कुर्वन्मुच्यतेऽखिलपातकैः ॥ ७२ ॥
स्नानदानमहादेववन्दनादिषु यत्फलम् ।
तत्फलं लभते सेतौ पादस्पृष्टे हि मानुषः ॥ ७३ ॥
सेतुयानासमर्थो यः सुदूरस्थः स्मरत्यमुम् ।
सोऽपि पातकसंघातैरखिलैरपि मुच्यते ॥ ७४ ॥
इत्युदीर्य यतिश्रेष्ठो रामेश्वरकथां शुभाम् ।
तत्रत्येषु च तीर्थेषु स्नानं कृत्वा यथाविधि ॥ ७५ ॥
प्रदक्षिणनमस्कारैः प्रसाद्य परमेश्वरम् ।
सशिष्यः प्रस्थितस्तस्मात् तीर्थस्नानामलाशयः ॥

॥ इति श्रीशङ्कराचार्यचरिते अष्टमोऽध्यायः ॥

# नवमाध्यायः ॥

ततो यतिकुलाचार्यः सशिष्यः शास्त्रवित्तमः ।
भूमिं प्रदक्षिणीकृत्य भूयः काञ्चीपुरं गतः ॥ १ ॥
जंबूद्वीपस्य कुर्वाणे शोभां भारतमण्डले ।
शस्तं काश्मीरनामानं देशं विद्योतयत् भृशम् ॥ २
कामाक्ष्या नाम वाग्देव्याः स्थानं तत्पुरमाप्तवान् ।
तत्रत्यसर्वविद्वाद्भिः पूज्यमानं दिने दिने ॥ ३ ॥
सर्वज्ञपीठमारोढुमियेष यतिपुङ्गवः ।
वादिभिः कर्मकाण्डज्ञैः कणादादिभिरप्ययम् ॥ ४
स्वे स्वे शास्त्रे रहस्यं यत् तत्पृष्टः शङ्करो महान् ।
यथावदुत्तरं सर्वं समुदीर्य महामति ॥ ५ ॥
आरुरुक्षुरभूत् पीठं तदैका भारती श्रुता ।
कामशास्त्रस्य तत्वज्ञः किं भवान् यतिपुङ्गव ॥ ६ ।
अस्य दत्वोत्तरं पीठं पुनरारुह्यतां त्वया ।
आकर्ण्य विस्मितो धीमान् वचनं तदमानुषम् ॥ ७
सर्वं बुद्ध्या विनिश्चित्य देवीमेवमयाचत ।
तस्योत्तरमहं वक्ष्ये गते हि दिनसप्तके ॥ ८ ॥
हे भारति, दयांभोधे देहि मे तावदन्तरम् ।
देव्या तथेत्यनुज्ञातस्ततो योगीश्वरो यतिः ॥ ९ ॥
स्वदेहरक्षणे शिष्यानादिश्य तरुकोटरे ।

स्थित्वा निजतनुं त्यक्त्वा परमेण समाधिना ॥ १० ॥
विवेशामरुकाख्यस्य राज्ञः कायं गतासुकम् ।
वात्स्यायनरहस्यार्थं ज्ञात्वा सर्वं च बुद्धिमान् ॥ ११ ॥
तद्व्याख्यानं च कृत्वा स प्रविवेश निजां तनुम् ।
अथ तां भारतीं देवीं द्रष्टुमासाद्य शङ्करः ॥ १२ ॥
तस्याः प्रश्नोत्तरं सर्वं निजगाद महामतिः ।
तदा तं भारती प्रोचे कस्मात्त्वं यतिपुङ्गव ॥ १३ ॥
वात्स्यायनार्थतत्त्वज्ञो विना स्वाश्रमकल्मषम्? ।
अथ तां शङ्करः प्रोचे परकायप्रवेशतः ॥ १४ ॥
कामशास्त्ररहस्यानि मया ज्ञातानि भारति ।
जन्मप्रभृति देहेऽस्मिन् नैवाहं कृतकिल्बिषः ॥ १५ ॥
इत्युक्त्वा तदनुज्ञातः पीठमारुह्य तस्थिवान् ।
मानितोऽथ सभासद्भिर्वाग्देव्या च सविस्मयः ॥ १६ ॥
महानुभावः स्वैः शिष्यैः प्रतस्थे शङ्करस्ततः ।
ततः क्षेत्राणि पुण्यानि तीर्थानि च निषेव्य सः ॥ १७ ॥
क्रमेण शिष्यसंयुक्तो वृषाचलमवाप्तवान् ।
तत्र दक्षिणकैलासे निवसन्नेकदा गुरुः ॥ १८ ॥
ज्ञात्वा निजशरीरान्तं सह शिष्यैः प्रसन्नधीः ।
कासारे पश्चिमे स्नात्वा नत्वा तत्रत्यमीश्वरम् ॥ १९ ॥
श्रीमूलस्थानमासाद्य चक्रे तस्य प्रदक्षिणम् ।
गोपुरेणान्तराविश्य कृष्णं नत्वा यतीश्वरः ॥ २० ॥

वाहनेन्द्रं पुरारातेर्गत्वा वृषभमानमत् ।
केरळावनिकर्तारं हर्तारं सर्वभूभुजाम् ॥ २१ ॥
सोऽनमत् भार्गवं रामं नृणामवनतत्परम् ।
सिंहोदरमथार्थं च नत्वा कुर्वन् प्रदक्षिणम् ॥ २२ ॥
शंखचक्रगदापद्माद्यायुधाद्यनमद्धरेः ।
ततो भक्तिसमायुक्तः प्रविश्य भवनोदरम् ॥ २३ ॥
नृत्तं भगवतः शंभोर्नत्वा नतफणीश्वरः ।
उत्तरेशमुमाकान्तं पार्वतीं च विनायकम् ॥ २४ ॥
ततो हरिहरं चैव दक्षिणेशं रमापतिम् ।
यथावद्वन्दनं कृत्वा (?) मण्डपेषु ननाम सः ॥ २५ ॥
बहूनि स्तोत्रमुख्यानि देवत्रितयवन्दने ।
चक्रे श्रीशङ्कराचार्यो भृशं भक्तिसमन्वितः ॥ २६ ॥
नारायण मुराराते कृष्ण गोविन्द माधव ।
पाहि मां शरणं प्राप्तमाशु संसृतिसागरात् ॥ २७ ॥
हर विष्णो महादेव वैकुण्ठ गिरिजापते ।
लक्ष्मीरमण मां पाहि भवांभोधेः सुदुस्तरात् ॥ २८ ॥
हर रुद्र मृडेशान शंभो गिरिश शङ्कर ।
गङ्गाधर पुराराते गिरीश मदनान्तक ॥ २९ ॥
वेदान्तवेद्य सर्वज्ञ नमस्ते भगवान् विभो ।
प्रपन्नं पाहि मामेनं भवांभोधिनिमज्जनात् ॥ ३० ॥
अजानन्नपि जानन्वा जन्मन्यत्र परत्र वा ।

यदकार्षमहं पापं तत्सर्वं हर संहर ॥ ३१ ॥
देवत्रयमिति स्तुत्वा भासमानं वृषाचले ।
शिष्यैः सह महायोगी प्रदेशे कुत्रचित् गुरुः ॥ ३२ ॥
निविष्टः सुप्रसन्नात्मा सर्वपापादमूर्द्धजम् ।
यथावच्चिन्तयामास वैष्णवं रूपमादरात् ॥ ३३ ॥
वाञ्छितं निर्जरैः सर्वैः शिरसा धर्तुमन्वहम् ।
विष्णोः पादसरोजन्मपांसुपूरमघापहम् ॥ ३४ ॥
चक्रमत्स्यादिरूपाभिर्वन्द्याभिरखिलामरैः ।
रेखाभिः शोभमानं तत्पादांबुजतलद्वयम् ॥ ३५ ॥
बलियज्ञे समाक्रान्तभुवनत्रितयं महत् ।
पादपल्लवयुग्मं च शारदांभोजसन्निभम् ॥ ३६ ॥
हिमांबुकणिकाभूपितांभोरुहदलाश्रिताम् ।
पादयुग्मांगुलीं राजन्नखरत्नविराजिताम् ॥ ३७ ॥
हरिन्मणिमहाकूर्मशोभाहारि शरीरिणाम् ।
श्रेयःप्रदायि दैत्यारेः पादाग्रयुगलं च तत् ॥ ३८ ॥
इन्द्रनीलशिलादण्डसुन्दराकारशोभिते ।
इन्दिराकरसंमृष्टे जंघे सूरीन्द्रवन्दिते ॥ ३९ ॥
चित्तादर्शनिशानार्थं निर्मितामेव योगिनाम् ।
समुद्गयुगलीं रम्यां वृत्तां जानुद्वयीं हरेः ॥ ४० ॥
मधुकैटभदैत्येन्द्रवध्यस्थलमपि स्फुटम् ।
जगत्पावनमुख्यं तमूरुद्वन्द्वं च भासुरम् ॥ ४१ ॥

वाडवाग्निप्रभाभूषितार्णवांबुसमुज्ज्वलम् ।
उदारं जघनद्वन्द्वं पीतांबरविराजितम् ॥ ४२ ॥
नानाविधमणिव्रातकिरणावलिपूरिताम् ।
काञ्चनीमपि काञ्चीं तां बद्धां पीतांबरोपरि ॥ ४३ ॥
स्वर्णाद्रिकर्णिकां बिभ्रन् सा्रह्मालिमन्दिरम् ।
नाभीसरसि सञ्जातं भोजमपि भूषयन् ॥ ४४ ॥
काञ्चनोदरबद्धाभावाडवाग्निप्रभान्वितम् ।
योगिमानसमत्स्यानामावासमुदरार्णवम् ॥ ४५ ॥
कौस्तुभांशुप्रवालाढ्यमुक्ताफलविराजितम् ।
वक्षोभागं रमोद्यानं श्रीवत्सस्तबकाञ्चितम् ॥ ४६ ॥
शंखचक्रगदापद्मनन्दकाद्युपलक्षितान् ।
विश्वरक्षासमुद्युक्तान् क्षत्रस्पर्धिकृतो भुजान् ॥ ४७ ॥
स्वर्णकुण्डलसञ्जातैरुद्योतैरुपशोभितम् ।
कण्ठमालिङ्गने लक्ष्मीकङ्कणालिपदाङ्कितम् ॥ ४८ ॥
पद्मानन्दकरं छन्नदन्ततारौघनीरजम् ।
दन्तांबरसहस्रांशुं वक्त्रांबरविराजितम् ॥ ४९ ॥
इन्द्रनीलशिलाक्लृप्तसुन्दरादर्शजित्वरम् ।
गण्डमण्डलयुग्मं च कुण्डलोद्योतमण्डितम् ॥ ५० ॥
घोणं दन्तांबरापक्वबिंबदंशनकांक्षिणः ।
शुकस्य तुण्डवत्कान्तं शोणं कुण्डलशोभया ॥ ५१ ॥
त्रैलोक्यमन्दिरालोकदीपचन्द्रार्करूपिणी ।

नेत्रपद्मे पदांभोजसंश्रितातिदयापरे ॥ ५२ ॥
सदा नियमिताशेषलोकत्रितयमुल्लसत् ।
भ्रूयुगं सुभ्रमध्यं च शोभाविजितषट्पदम् ॥ ५३ ॥
पद्माकटाक्षसंफुल्लपद्मार्चितमनारतम् ।
शिवलिङ्गं ललाटस्थमूर्ध्वपुण्ड्रमयं च तत् ॥ ५४ ॥
महादेवशिरोगङ्गास्पर्द्धया यमुनामिव ।
आरुह्याजशिरोऽधस्तात् गलन्तीं कुन्तलावलिम् ॥
अब्धितीरगतौर्वाग्निज्वालाशङ्कां प्रपश्यताम् ।
कुर्वन् स्वर्णकिरीटं च सोऽस्मरन्मुरवैरिणः ॥ ५६ ॥
तिष्ठन्तमान्तिके तार्क्ष्यं शय्यारूपं च भोगिनम् ।
प्राणनाथे च कंसारेः सोऽस्मरत् भार्गवीधरे ॥ ५७ ॥
इत्थं चिन्तयतो रूपं वैष्णवं सकलं गुरोः ।
वक्त्रात् प्रादुरभूत् स्तोत्रं स्रग्धरावृत्तमाश्रितम् ॥५८॥
निर्गलत् गुरुवक्त्रेन्दोर्मधुजिन्नवनामृतम् ।
कर्णाभ्यां सम्यगापीय सर्वाङ्गोत्पुलकान्विताः ॥५९॥
तदागता नभोमार्गे विमानस्था दिवौकसः ।
यक्षाकिंपुरुषाद्याश्च सर्वे मुमुदिरे भृशम् ॥ ६० ॥
सन्तुष्टदिविषत्संघे वाद्यघोषं च निर्भरम् ।
कुर्वत्यानन्दनृत्तं च वृष्टिं दिव्यां च कौसुमीम् ॥ ६१ ॥
देशिकेन्द्रो महायोगी स्तोत्रं कुर्वन् स वैष्णवम् ।
विवेश परमानन्दं भानुबिंबान्तरास्थितम् ॥ ६२ ॥

इदं श्रीशङ्कराचार्यचरितं लोकपावनम् ।
कृतं गोविन्दनाथेन यतिभक्तिसहायतः ॥ ६३ ॥
ज्ञानप्रदं नरैः सर्वैर्यतिभिस्तु विशेषतः ।
स्मर्तव्यं पठितव्यं च श्रोतव्यं चानुवासरम् ॥ ६४ ॥
ये पठन्ति नरा वृत्तं शङ्कराचार्ययोगिनः ।
ज्ञानं विद्यां च मोक्षं च ते प्राप्नुयुरसंशयम् ॥ ६५ ॥
पुत्रार्थी पुत्रसम्प्राप्तिं शिष्यार्थी शिष्यसम्पदम् ।
लभते शङ्कराचार्यचरितं कीर्तयन् नरः ॥ ६६ ॥
भिक्षुको यः पठत्येतत् शृणोति च दिने दिने ।
स ज्ञानी बहुलारोग्यो लभते परमं पदम् ॥ ६७ ॥
इत्युवाच यतिश्रेष्ठः शङ्कराचार्यसत्कथाम् ।
श्रोतुकामाय शिष्याय भक्तियुक्ताय भक्तिमान् ॥ ६८ ॥

॥ इति श्रीशङ्कराचार्यचरिते नवमोऽध्यायः ॥

॥ समाप्तमिदं शङ्कराचार्यचरितम् ॥

